॥ श्रीः ॥

# प्रायश्चित्तकदम्बः ।

विद्वद्वर श्रीगोपाल न्यायपञ्चाननोप निबद्धः ।

काशीस्थ मिथिलेश संस्थापित पाठालयाध्यापक मिश्रो पाह्व श्रीजयदेवशर्म प्रदर्शितरीत्या तदन्तेवासिना व्याकरणतीर्थोपाधिभाजा भक्षीग्रामवास्तव्य मिश्रोपाह्व श्रीयोगधरशर्म्मणा संशोधितः

दरभंगा नगरस्थ मिथिला प्रकाशनामक परिषदा काशीस्थ जगदीशयन्त्रालये मुद्रयित्वा प्रकाशितः

संवत् १९५० वैक्रमे वैशाख कृष्णषष्ठी शुक्रे
खीष्टाब्द १८९३
ऐशाविये

## ॥ प्रायश्चित्तकदम्बस्यसूचीपत्रम् ॥

प्रायश्चित्तकदम्बस्थविषयान्वेषणैषिणा ।
सूची प्रस्तूयतेपूर्वंश्रीयोगधरशर्म्मणा ॥

| विषयः | पृष्ठे | पङ्क्तौ |
|---|---|---|
| गोवधापवादः | ४२ | १५ |
| गवेतरपशुपाक्षिसर्पादिवधप्रायश्चित्तम् | ४५ | ९ |
| क्षत्रियादिवधप्रायश्चित्तम् | ४७ | ११ |
| प्रतिलोमजजातिवधप्रायश्चित्तम् | ४९ | १५ |
| स्त्रीवधप्रायश्चित्तम् | ५० | ४ |
| संक्षेपः | ५० | १३ |
| सकृत्सवर्णव्यभिचारितस्त्रीवधप्रा० | ५१ | ६ |
| संक्षेपः | ५१ | १८ |
| चाण्डालाद्यन्नभक्षणप्राय० | ५२ | ९ |
| संक्षेपः | ५८ | ७ |
| उत्सर्गादिवाक्यम् | ५९ | १ |
| भुक्तोच्छिष्टस्यचाण्डालादिस्पर्शप्रा० | ५९ | १२ |
| चाण्डालादिच्छिन्नयज्ञोपवीतेप्राय० | ५९ | १९ |
| चाण्डालीगमनेप्रायश्चित्तम् | ६० | ३ |
| शौंडिकाद्यन्नभक्षणप्रायश्चित्तम् | ६१ | १० |
| संक्षेपः | ६४ | २० |
| शूद्रोच्छिष्टभोजनप्रायश्चित्तम् | ६५ | १७ |
| उच्छिष्टब्राह्मणादिस्पर्शादिप्रायश्चित्तम् | ६७ | ११ |
| शूद्रादीनांप्रतिलोमस्त्रीगमनप्रा० | ६८ | १९ |

॥ इति सूचीपत्रं समाप्तिमगात् ॥

## ॥ श्रीगणेशाय नमः ॥

नत्वा कृष्णपदद्वन्द्वं निर्णयो मुनिसंमतः ॥
प्रायश्चित्तकदम्बानां गोपालेन वितन्यते ॥ १ ॥

अथ प्रायश्चित्तानिर्णयः ॥ तत्र हारीतः, प्रयतत्वाद्वोपचितमशुभं नाशयतीति प्रायश्चित्तं । तत्र वाशब्दएवकारार्थः (वास्याद्विकल्पोपमयोरेवार्थेचसमुच्चय) इतिविश्वदर्शनात् । प्रयतत्वाद्यथाविध्यनुष्ठानात् उपचितम् संचितमशुभमेव नाशयति, नतु फलान्तरं जनयति, यत्कर्म तत्प्रायश्चित्तम्, अशुभं पापं, पापिनां तदुपदेशेन फलमाहांगिराः, यत्पुण्यमुद्धृते विप्रे म्रियमाणे जलादिषु । तत्पुण्यं तारिते पापात्प्रायश्चित्तैस्तु मानवे ॥

धर्मशास्त्रमविज्ञाय प्रायश्चित्तं न वक्तव्यम्, अबुद्ध्वा धर्मशास्त्राणि प्रायश्चित्तं वदंति ये प्रायश्चित्तीभवेत्पूतस्तत्पापं तेषु गच्छतीति शातातपीयात् ॥ तदर्चादिपूर्वकं कथितव्यम् । अनर्चितैरनाहूतैरपृष्टैश्चैव संसदि । प्रायश्चित्तं न वक्तव्यं जानद्भिरपिज

ल्पते, इत्यंगिरोवचनात् । पापिना सचैलं स्नात्वा उपदेष्टारं तोषयित्वा सदसि स्पष्टाभिधानं वक्तव्यम्, सचैलं वाग्यतःस्नात्वा क्लिन्नवासाःसमाहितः । उपस्थाय ततः शीघ्रमार्तिमान्धरणीङ्गतः । गात्रैश्च शिरसा चैव न च किञ्चिदुदीरयेत्, इत्यंगिरोवचनात्, तोषयित्वाद्विजोत्तमान् इतिदेवलीयाच्च ॥ यन्तु पापं संख्यापयेत्पापी दत्वा धेनुं तथा वृषम् इति पाराशरवचनम् तन्महापातकादौ विपुलधनविषयम् । निश्चितपापस्य भोजनेसदस्यसत्यभाषणे च पापवृद्धिमाहांगिराः, कृतेनिःसंशये पापे न भुंजीतानुपस्थितः । भुञ्जानो वर्द्धयेत्पापमसत्यं सदसि ब्रुवन् । वर्षमध्ये प्रायश्चित्ताकरणे द्विगुणंप्रायश्चित्तं । संवत्सराभिशस्तस्य दुष्टस्यद्विगुणो दमइति मनुवचनात् । कालातिरेके द्विगुणं प्रायश्चित्तं समाचरेत् । द्विगुणं राजदण्डं च दत्वा शुद्धिमवाप्नुयात् इतिदेवलीयाच्च । अत्र संवत्सरमध्ये कालातिक्रमप्रायश्चित्तकरणे भागहारक्रमेण संवत्सरगणनक्रमेण प्रायश्चित्तमिति वदन्ति ॥

आर्तानां जिज्ञासूनां प्रायश्चित्ताकथने ऽर्चितस्य विपश्चितो दोषः । आर्तानां याचमानानां प्राय

श्चित्तानि ये द्विजाः । जानंतो न प्रयच्छंति तेपि तद्दोषभागिन इत्यंगिरोवचनात् ॥

क्षत्रियादौ प्रायश्चित्तकथने ब्राह्मणमन्तरितं कृत्वा कथनीयम् । न्यायतो मार्गमाणस्य क्षत्रियादेः प्रणामिनः । अन्तराब्राह्मणं कृत्वाव्रतमेतत्समादिशेत् इत्यंगिरोवचनात् ॥

गुरुपापे च लघुप्रायश्चित्तं लघुपापेगुरुप्रायश्चित्तं न वक्तव्यम् । पापे गुरुणि गुरूणि स्वल्पान्यल्पे चतद्विदः । प्रायश्चित्तानि मैत्रेय जगुः स्वायंभुवादय इतिविष्णुवचनात् । अन्यथा हि महावाहो लघूनामुपदेशतः । गुरूणामुपदेशो हि निष्प्रयोजनतां व्रजेत् इतिभविष्यपुराणाच्च ॥

प्रायश्चित्तप्रदाने यथोक्तं वाच्यं न तु स्नेहादिनाऽनुग्रहः कार्यः । तद्यथा लोभाद्वा यदि वा स्नेहान्मोहादज्ञानतोपि वा । कुर्वंत्यनुग्रहं ये तु तत्पापं तेषु गच्छतीति पाराशरीयात् । शास्त्रीयप्रायश्चित्तमुदाहृत्य दुर्बलत्वादिनानुग्रहः कार्य्यः । कृत्वा पूर्वमुदाहारं यथोक्तं शास्त्रवेदिभिः । पश्चात्कार्यानुसारेण शक्त्या कुर्वन्त्यनुग्रहमित्यंगिरोवचनात् । कार्यानुसारेण दुर्बलत्वादिना । दुर्बलेऽनुग्रहः कार्यस्तथा वै शिशुवृद्ध

योः। अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहीभवेदिति पाराशरीयाच्च। अनुग्रहादौ सर्वत्र पादन्यूनं प्रायश्चित्तं न कर्तव्यम् तस्मात्कृच्छ्रमथाप्यर्द्धं पादं वापि विधानतः। ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेदिति हारीतात् । कृच्छ्रपदेनाजहत्स्वार्थलक्षणया पादोनकृच्छ्रमपि ज्ञेयम् ॥

यद्वर्णे यत्प्रायश्चित्तं तद्वर्णे वालवृद्धस्त्रीरोगिणान्तदर्द्धम्प्रायश्चित्तम्। अशीतिर्यस्य वर्षाणि वालो वाप्यूनषोडशः। प्रायश्चित्तार्द्धमर्हति स्त्रियो रोगिण एव चेति विष्णुपुराणात्। अत्र एकस्योभयधर्मवत्वे धर्मत्रयवत्वेपि वा पादप्रायश्चित्तम्। अनुग्रहे पादं वेति वाशब्दस्यैवकारार्थत्वादिति मिताक्षरापि । अर्द्धमेव भवेत्पुंसां तुरीयन्तत्र योषितामिति, अत्रोनषोडशवार्षिकग्रहणात्तदूर्ध्वं संपूर्णप्रायश्चित्तं ज्ञेयम्, ऊनैकादशवर्षीयस्य बालस्य पंचवर्षात्परं पादं प्रायश्चित्तं। पादो वालेषु दातव्यः सर्वपापेष्वयं विधिरितिविष्णुवचनात् । ऊनैकादशवर्षस्य पंचवर्षाधिकस्य च। चरेद् गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये। एतेन स्वयमशक्तौ प्रतिनिधिद्वारापि प्रायश्चित्तं करणीयम् ॥

पञ्चवर्षमध्ये तु प्रायश्चित्तं न करणीयम्। ततो न्यूनतरस्यास्य नापराधो न पातकं। न चास्य राज दण्डोस्ति प्रायश्चित्तं न विद्यत इत्यंगिरोवचनात्॥ यत्तु चतुर्थाद्वत्सरादूर्ध्वमष्टमं यावदेव हि। शिशोर्व्रतं प्रकुर्वन्ति गुरुसंबन्धिबांधवा इतिब्रह्मपुराणे पञ्चमे वर्षे व्रतविधानम्,तत्पापनाशकातिरिक्तपरमतो न विरोधः॥

ज्ञानाऽज्ञानकृते पापे यत्र यदेवोक्तम् तत्र तदेव करणीयम् यत्राज्ञानकृते यदुद्दिष्टं ज्ञानकृते तत्र तद्द्विगुणम्, ज्ञानकृते यदुद्दिष्टमज्ञानकृते तदर्धं प्रायश्चित्तं। स्यादकामकृते यत्तद् द्विगुणं बुद्धिपूर्वके इत्यंगिरोवचनात्। कृच्छ्रांस्तु चतुरःकुर्याद् गोवध बुद्धिपूर्वके। अमत्या तु द्वयं कार्यं तदर्धं बालवृद्धयोरितिविश्वामित्रवचनात्, एकत्रनिर्णीतः शास्त्रार्थो बाधकं विना परत्रापीति न्यायाच्च॥

त्रिविधपापोत्पत्तिकारणं यथा मनुः अकुर्वन्विहितं कर्म निंदितं च समाचरन्। प्रसक्तश्चेंद्रियार्थेषु प्रायश्चित्तीयते नरः। नन्विंद्रियार्थप्रसंगस्य कथं पृथगुपादानम्, इंद्रियार्थेषु सर्वेषु न प्रसज्जेत कामत इति मनुना तस्य निषिद्धत्वादिति चेत्सत्यम्। इन्द्रियार्थप्रसंगेनात्र दंशाभिशापावुपलक्ष्येते, ताभ्यां द

श्यमानाभिशप्यमानयोः पापमुत्पद्यते । यथा मनुः, श्वशृगालखरैर्दष्टो ग्राहक्रव्याद्भिरेवच । नराश्वोष्ट्र वराहैश्च प्राणायामेन शुद्ध्यतीति । पैठीनसिः अनृतमभिशप्यमानः मासं कृच्छ्रं समाचरेत् । पातकेषु महापातकेषु द्विमासमिति, त्रिविधान्येतानि जातिभ्रंशकरसंकरीकरणाऽपात्रीकरणमलावहप्रकीर्णोपपातकानुपपातकमहापातकातिपातकानि जनयंति नवविधानि । यथा मनुः, ब्राह्मणस्य रुजःकृत्या घ्रातिरघ्रेयमद्ययोः । जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकराणि च । रुजःकृत्या पीडाकरणम्, अघ्रेयं लसुनादि, जैह्म्यं मित्रे कौटिल्यम् । खरोष्ट्राश्वमृगेभानामजाविकवधस्तथा । संकरीकरणं ज्ञेयं मीनाहिमहिषस्यच । निन्दितेभ्योधनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् । कृमिकीटवयोहत्यामद्यानुगतभोजनं । फलैधःकुसुमस्तेयमधैर्य्यञ्च मलावहम् । मद्यानुगतम्मद्यपानसमये यदुपस्थापितं फलमूलादि, अधैर्य्यमल्पापचये वैकल्यं । विष्णुः यदनुक्तंतत्प्रकीर्णम् ॥

अथोपपातकमाह मनुः । गोवधोऽयाज्यसंयाज्यपारदार्यात्मविक्रयाः । पितृमातृगुरुत्यागःस्वाध्याया

ग्न्योःसुतस्य च । परिवित्तिताऽनुजेऽनूढे परिवेदनमे
वच । तयोर्दानं च कन्यायास्तयोरेव च याजनम् ।
कन्याया दूषणं चैव वार्धुषित्वं व्रतच्युतिः । तडागा
रामदाराणामपत्यस्य च विक्रयः । व्रात्यता बान्धव
त्यागो भृतकाध्यापनं तथा। भृताच्चाध्ययनादानमप
त्यानां च विक्रयः । सर्वाकरेष्वधीकारो महायन्त्रप्रव
र्तनं । हिंसौषधीनांस्त्र्याजीवोऽभिचारो मूलकर्म च।
इन्धनार्थमशुष्काणां वृक्षाणामवपातनम् । आत्मार्थं
च क्रियारंभो निंदितान्नादनं तथा । अनाहिताग्नि
ता स्तेयमृणानां चानपक्रिया । असच्छास्त्राधिगम
नं कौशीलव्यस्य च क्रिया । धान्यकुप्यपशुस्तेयं म
द्यपस्त्रीनिषेवणम् । स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं
चोपपातकम् ॥ परिवेदनमेव चेति चकारात्कन्याया
अपि । मूलकर्म वशीकरणोच्चाटनकरणं, क्रियारम्भ
आत्मार्थं पाकारम्भः । नास्तिक्यं नास्ति परलोक
इत्यध्यवसानं ॥

अनुपातकमाह विष्णुः। पितृपितृव्यमातामहमातुल
श्वसुरनृपपत्न्यभिगमनं पितृष्वसृमातृष्वसृगमनं च श्रो
त्रियर्त्विगुपाध्यायमित्रपत्न्याभिगमनं स्वसृसख्याः स
गोत्रायाः उत्तमवर्णाया अन्त्यजायाः कुमार्या रजस्वला

याः शरणागतायाः प्रव्रजितायाः अभिगमनं निक्षिप्ता याश्च, पितृपत्नी विमाता गंतारमपेक्ष्य हीनवर्णा, अन्त्यजाऽत्र चाण्डाली, कुमारी ब्राह्मणकन्या, निक्षिप्ता स्थापिता ॥

महापातकमाह मनुः, ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महांति पातकान्याहुः संसर्गश्चापि तैःसह ॥ शूद्रस्य सुरापानस्थाने ब्राह्मणीगमनं, तस्य सुरापाने पातित्याभावात्। स्तेयं ब्राह्मणस्वामिकाशीतिरक्तिकामितहेम्नः , गुर्वङ्गना सवर्णोत्तमवर्णा वा विमाता, नवधासंसर्गमाह बृहस्पतिः। एकशय्यासनं पंक्तिर्भाण्डपक्वान्नमिश्रणम्।याजनाध्यापनं योनिस्तथा च सहभोजनम् ॥ नवधासंकरःप्रोक्तो न कर्तव्योऽधमैः सह। नारदः, याजनंयोनिसंबन्धःस्वाध्यायःसहभोजनम्। कृत्वा सद्यःपतन्त्येते पतितेन न संशयः। याजनं श्रौतयाजनं । सहभोजनमेकपात्रभोजनं, तथा आलापाद्गात्रसंस्पर्शात्स्वाध्यायात्सहभोजनात् । सहशय्यासनाद्यानात्पापं संक्रमते नृणाम् ॥ सहभोजनमेकपंक्तिभोजनं, यानं रथः, आलापादेस्तु संवत्सरेणपातकित्वसंपादकत्वं,संवत्सरेण पताति पातितेन सहाचरन्निति विष्णुवचनात्। तस्मादालापादेर्ल

घु संख्यानाच्च लघुसंसर्गता वाच्या ॥

अतिपातकमाह विष्णुः मातृगमनं दुहितृगमनं स्नुषा गमनमित्यातिपातकानि स्नुषा पुत्रवधूः ॥

## ॥ अथधेनुमूल्यनिर्णयः ॥

तत्रसंवर्तः । प्राजापत्यव्रताशक्तौ धेनुं दद्यात्पयस्विनीम् । धेनोरभावे दातव्यं तुल्यं मूल्यन्नसंशयः॥ अत्रोत्तममध्यमाधमभेदेन मूल्यमाह षड्त्रिंशन्मुनिमतम ॥ धेनुः पंचभिराढ्यानां मध्यानां त्रिपुराणिका । कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्तिता॥ कार्षापणः षोडशपणाः,(कार्षापणः कार्षिके स्यात्पणः षोडशकेपि च)इति बिश्वः, कात्यायनः। द्वात्रिंशत्पणिका गावो वत्सः पौराणिको मतः । धेनुमूल्यं कार्षापणत्रयम्, सवत्सा गौ धेंनुरित्यर्थः गोमूल्यं कार्षापणं कलावित्यधिकारे स्मृतिः, गौःषोडश पणास्तत्र मानवाः ह्यति निर्धनाः । हिर्हेतौ । यन्तु बृषभमूल्यं पंच कार्षापणा इति तन्न, शूलपाणिलिखितबचनाविरोधात् । धेनु संकलने तेन पठंतीति कृत्वा लिखितम् , द्वात्रिंशत्पणिका गावो वृषभः षट्पुराणिक इति प्रासिद्धबचनानुसारेण व्यवस्था श्रेयसीति प्रतीमः ॥

अथप्रायश्चित्तपूर्वाह्नकृत्यं। शंखलिखितौ वाप्यकेश नखान्पूर्वं घृतं प्राश्य वहिर्निशि। प्रत्येकं नियतं काल मात्मनो व्रत मादिशेत्॥वहिर्नगृहे,प्रत्येकं नियतं काल मिति कालसंख्याः संकल्पवाक्ये उल्लेखनीया इत्यर्थः। निशि निशामुखे। व्रतं निशामुखे प्राह्यं वहिस्तारकद र्शनादिति लघुहारीतेनैकवाक्यत्वात् तेन प्रायश्चित्तपूर्व दिने केशादीनि वापयित्वा स्नात्वा घृतं प्राश्य प्रदोषे संकल्पः कार्य्यः॥

मुण्डनं च महापातकगोवधाद्यतिरिक्ते वि द्वद्विप्रनृपस्त्रीणां नास्ति। विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम्। ऋते महापातकिनो गोहंतु श्चावकीर्णिन इतिमिताक्षरीयात्। स्त्रीणां मु ण्डने विशेषमाह पराशरः। वपनं नैव नारीणां ना नुव्रज्या जपादिकम्। न गोष्टे शयनं कार्यं न च दध्यु र्गवाजिनं॥ सर्वान् केशान्समुद्धृत्य छेदयेदं गुलिद्वयं। सर्वत्रैव हि नारीणां शिरसो मुण्डनं स्मृतम्॥सर्वत्रेति प्रागुक्तमहापातकादिपरम्, अत्र नारीपदं विधवा परम्। सधवाया अंगुलिद्वयच्छेदनादिमुण्डननिषेध माह पारिजातधृतवचनम्। सधवानां तु नारीणा मलंकाराय सर्वदा। केशसंवरणं प्रोक्तं प्रायश्चित्ते द्वि

जोत्तमैः । अत्र विधवाया वपनं सधवाया अंगुलिद्व यच्छेदनं यत्केन चिदुक्तम् तत्पराशरीयद्वितीयवच नशेषार्द्धानवलोकनेनेति हेयम् ॥

केशधारणेच्छायां द्विगुणव्रतमाह हारीतः । केशानां धारणार्थं तु द्विगुणं व्रतमाचरेत् । द्विगुणे च व्रते चीर्णे द्विगुणा दक्षिणा भवेत् । व पनं च द्वादशाहान्यूनसाध्ये व्रते कार्य्यम्, द्वादशाहे संपूर्णं बपनमिति पैठीनसिः । न्यूने त्वाह संवर्तः । नखानां छेदनं पादे द्विपादे श्मश्रुणः स्मृतं । त्रिपा दे तु शिखावर्ज्जं सशिखं च ततः परम् । वपनादि कं तु धेनुदानादावपि तुल्यन्यायादिति ज्ञेयम् । स शिखवपने तु सदावद्धशिखेन चेत्यस्य गायत्रया तु शिखां वध्वा नैर्ऋत्यां ब्रह्मरन्ध्रतः । जुटिकां च ततो वध्वा ततः कर्म समाचरेत् इतिब्रह्मपुराणस्य च वा धो न दोषाय, नैमित्तिकेन नित्यवाधस्य फलचम सादौ संगृहीतत्वादिति ॥

अष्टमीचतुर्दशीभिन्नकाले प्रायश्चित्तमाह व्य वहारचिंतामणौ व्यासः । नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणम् । इति चतुर्दश्यां संकल्प्या मावास्यायां कर्य्यमिति शिष्टाचारः ॥

अथव्रतानिर्णयः ॥ दिवा विलंघ्य रात्रेः सार्द्धप्रहरा भ्यंतरे परिमितहविष्यान्नभोजनरूपं नक्तव्रतं। तद शक्तौ रूप्यमाषकं दातव्यं। पक्षिवधे नक्तं रूप्यमा षकं वा दद्यादिति हारीतसूत्रात्। रूप्यमाषकं च र क्तिकाद्वयमाह मनुः। द्वे कृष्णले समधृते विज्ञे योरूप्यमाषकः। तदभावे तन्मूल्यं दातव्यं। धेनो रभावे दातव्यन्तुल्यं मूल्यं न संशयः इत्येकत्र दृष्ट त्वादन्यत्रापितथाकल्प्यते। उपवासव्रतं नक्तत्रयेण समं, दिवाभोजनरहितस्य रात्रिक्षपणे क्लेशद्वैगु ण्यात्तदशक्तौ रूप्यमाषकत्रयं तन्मूल्यं वा अष्टौ पणा देयाः। अत्युत्कृष्टरजतत्रिमाषकस्य पणाष्टकल भ्यत्वादेवं द्वितीयोपवासादौ तथा वोध्यं। विशेषाश्र वणादिति शूलपाणिः। वाक्यं तु ओंअद्येत्यादिअमुक गोत्रः श्री अमुकदेवशर्मा पक्षिवधजन्यपापक्षयकामो नक्तव्रतमहंकरिष्ये। रूप्यभाषकदाने तु इदं नक्तव्रता नुकल्पं रूप्यमाषकं चंद्रदैवतं यथानामगोत्राय ब्राह्म णायाहं ददे मूल्यदाने तु इदं नक्तव्रतानुकल्परूप्य माषकमूल्यं विष्णुदैवत मित्यादि। दाने तु द्रव्यं ब्रा ह्मणं चादौ त्रिःसंपूज्य द्रव्यमालभ्य सम्प्रोक्ष्य दानं। अर्चितमर्चिताय दद्यात् आलभ्य सम्प्रोक्ष्य दद्यादिति

च हारीतसूत्रात् । यथोक्तदक्षिणां यथाशक्ति दक्षिणां वा दद्यादिति ।

प्राजापत्यव्रतमाह मनुः त्र्यहं प्रात स्त्र्यहं सायं त्र्यहमद्यादयाचितं । त्र्यहं परञ्च नाश्नीयात्प्राजापत्यं समाचरन् ॥ सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशति स्तथा । अयाचिते चतुर्विंशः परञ्चानशनं स्मृतं॥कुक्कुटाण्डप्रमाणं तु यावद्वा प्रविशेन्मुखम् । एतद्ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम् ॥ प्राजापत्यव्रतं षडुपवाससमं पयस्विधेनुदानसमानं च वाचिकम् । यथा नटादीनभिधाय मनुः भुक्त्वा वान्यतमस्यान्न ममत्या क्षपणं त्र्यहं । मत्या भुक्त्वा चेरत्कृच्छ्रं रेतोविण्मूत्रभक्षणे इत्यत्र मत्या षडुपवासे वक्तव्ये प्राजापत्यविधानादिति धेनुदानसमाने च षडुपवासे कार्षापणत्रयं, संलकनादिति ॥

पादोनं कृच्छ्रमाह शंखः द्व्यहं प्रातर्द्व्यहं सायं द्व्यहमद्यादयाचितं । द्व्यहं परञ्चोपवासं पादोनव्रतमाचरन् ॥ अत्र सार्द्धोपवासचतुष्टयसंकलनेन चतुःपणाधिककार्षापणद्वयं ॥

कृच्छ्रार्द्धव्रतमाहापस्तंवः सायं प्रातस्तथैवैकं दिनद्वयमयाचितं । दिनद्वयं च नाश्नीयात्कृच्छ्रार्द्धम

भिधीयते । एतद्दिनषट्कसाध्यमुपवासत्रयसंकलनेनसार्द्धकार्षापणतुल्यमिति ॥

पादकृच्छ्रमाह याज्ञवल्क्यः एकभुक्तेन नक्तेन तथैवायाचितेन च। उपवासेन चैकेन पादकृच्छ्रः प्रकीर्तितः॥ एतत्त्र्यहसाध्यं उपवासत्रयसंकलनेन सार्द्धोपवासतुल्यत्वेनात्र द्वादश पणा इति ॥

अथ ब्राह्मणस्वामिकचतुर्हायनादिकज्ञानकृतसाक्षाद्गोवधे व्रतमाह मनुः उपपातकसंयुक्तो गोघ्नो मासं यवान्पिबेत् । कृतवापो वसेद्गोष्टे चर्मणा तेन संवृतः॥ चतुर्थकाल मश्नीया दक्षारलवणं मितं। गोमूत्रेण चरेत्स्नानं द्वौ मासौ नियतेन्द्रियः। दिवानुगच्छेत्ता गास्तु तिष्ठन्नूर्ध्वं रजः पिबेत्॥शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत्॥ तिष्ठंती ष्वनुतिष्ठेत्तु व्रजंती ष्वप्यनुव्रजेत् । आसीनासु तथा सीनो नियतो वीतमत्सरः । आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः॥ पतितां पंकलग्नां वा सर्वप्राणैर्विमोचयेत् । उष्णे वर्षति शीते वा मारुते वाति वा भृशम् । न कुर्वीतात्मन स्त्राणं गोरकृत्वा तु शक्तितः ॥ आत्मनो यदि वा न्येषां गृहे क्षेत्रे खलेपि वा। भक्षयंतीन्न कथयेत्पिबंतं चैव वत्सकम् ॥ अनेन विधिना यस्तु

गोघ्नो गा मनुगच्छति। स गोहत्याकृतं पापं त्रिभि र्मासैर्व्यपोहति ॥ वृषभैकादशा गास्तु दद्यात्सु चरितव्रतः अविद्यमाने सर्वस्वं ब्राह्मणेभ्यो निवेदये त् ॥ अत्र गोमूत्रेण यवागूकृतमिति गौतमसूत्रात् गो मूत्रेण मासं यावकपानेन प्राजापत्यद्वयं मासद्वयं च तुर्थकाले भोजनेन त्रिंशदुपवासैः कृच्छ्रदशकं त्रिं शता नक्ताशनैः कृच्छ्रपंचकं संकलय्य मिलित्वा स प्तदश प्राजापत्यानि भवंति इत्युक्तं शूलपाण्यादि भिः। भवदेवभट्टस्तु द्वादश प्राजापत्यान्याह तेनात्र त्रैमासिकव्रतं सप्तदश प्राजापत्यानि सप्तदश धेनवः तन्मूल्यान्येकपंचाशत्कार्षापणा वा इति चत्वारः क ल्पाः॥दक्षिणा च वृषभैकादशा गावस्तन्मूल्यानि पंच दश कार्षापणा वा देया इति।अज्ञानात्कृते तदर्द्धं सा र्द्धमासिकव्रतादिकं गौरेकादक्षिणा देया इति। यथा सम्वर्तः पूर्णे तु सार्द्धमासे तु स विप्रान् भोजयेद् द्विजः। भुक्तवत्सु तु विप्रेषु गां प्रदद्याद्विचक्षणः॥ गवामभावे दातव्यं तन्मूल्यं तु न संशयः॥

अथ क्षत्रियस्वामिकाया गोर्ज्ञानकृतसाक्षाद्वधे तु देवलः षण्मासांस्तच्चर्मणा परिवृतो गोग्रासाहा री गोव्रतो यवाशी गोभिरेव संचरन् प्रमुच्यते। गो

ग्रासाहारी गोग्रासहर्ता, तेनात्र षाण्मासिकं व्रतं द्वा दश प्राजापत्यानि द्वादश धेनवस्तन्मूल्यानि षट्त्रिंश त्कार्षापणा वा इति चत्वारः कल्पाः ॥ दक्षिणा यथाशक्ति देयेति शूलपाणिः। भवदेवेन तु वृषभ हन्ता वृषभं स्त्रीगवीहन्ता गर्भपतनशीलाङ्गां दक्षिणा न्दद्यात् वृषभवेहतौ दद्यातामिति क र्तृद्वयनिर्द्देशादित्युक्तमिति। वस्तुतस्तु यद्यप्यत्र द क्षिणा न श्रूयते तथापि ब्राह्मणस्वामिकगोवधव्रता त्पंचधेनुहीनत्वाद्वृषभशून्या दश गावः प्रतीयन्ते, अन्यथा अज्ञानकृतवैश्यसम्वान्धिगोवधव्रतेधेनुरूपा गौ र्दक्षिणा याज्ञवल्क्येनोक्ता, अत्र यत्किंचिदिति विषम शिष्टत्वापत्तेः। एतज्ज्ञानकृते, अज्ञानकृ ते तदर्द्धम् ॥

वैश्यसम्वन्धिगोवधे तु याज्ञवल्क्यः पञ्चगव्यं पिवेद्गोघ्नो मासमासीत संयतः। गोष्ठे वसेद्गो नुगामी गोप्रदानेन शुद्ध्यतीति। गोमतीं च जपे न्नित्यमिति शातातपेनाधिकमुक्तम् अत्र मासव्रतं चत्वारि प्राजापत्यानि चतस्रो धेनव स्तन्मूल्यानि द्वादशकार्षापणा वा इति चत्वारः कल्पाः। दक्षिणा धेनुरूपा गौरिति शूलपाणिः। एतदज्ञानकृते, ज्ञा

न कृते तु द्वैगुण्यमिति। पंचगव्यं यथा। गोशकृत् द्वि गुणं मूत्रं घृतं दद्याच्चतुर्गुणं। क्षीरमष्टगुणं प्रोक्तं प ञ्चगव्ये तथा दधि ॥ तथा अष्टगुणम्।

शूद्रस्वामिकगोवधे विश्वामित्रः। कृच्छ्रांस्तु चतु रः कुर्याद् गोवधे वुद्धिपूर्वके। अमत्यातुद्वयं कुर्य्यात् तदर्द्धं बाल वृद्धयोः। स्त्रीशूद्रयोरेवमेतद्वधेष्वेव न सं शयः। अत्र चत्वारि प्राजापत्यानि चतस्रोधेनवः तन्मू ल्यानि द्वादश कार्षापणा वा इति त्रयः कल्पाः। एत ज्ज्ञानकृते। अज्ञानकृते प्राजापत्यद्वयं। अत्र सामन्य तः स्त्र्यादीनामर्द्धप्राप्तौ यद्गोवधे पुनरुपादानं तद् ब्राह्मणक्षात्रियविशां तुल्यं प्रायश्चित्तं शूद्रवालकस्त्री वृद्धानामर्द्धमितिज्ञापनार्थमिति शूलपाणिः। एकस्यो भयादिधर्म्मवत्त्वे पादइति। भवदेवेन तु विप्रे तु सकलं देयं पादोनं क्षत्रिये मतं। वैश्येऽर्द्धं पादशेषं तु शूद्रजा तिषु शस्यत इति वृहद्विष्णुवचनाद्गोवधे क्षत्रियादीनां पादहानिरुक्ता। गोघ्नइति यस्य व्यापारानंतरं कारणां तर मनपेक्ष्य कालांतरेऽपि गवां प्राणवियोगो भव ति सोपि साक्षाद् गोघ्नः। ज्ञानकृतं मां ज्ञात्वा एतां हन्मीति कामनया हननम्। अज्ञानकृतं च तद्रहित मिति। प्रायश्चित्तानंतरं पार्वणविधिना श्राद्धं कर्त

व्यम् । क्रियते श्राद्धमेतत् तु ब्राह्मणानां च भोजनम् । शुद्धयर्थमिति तत्प्रोक्तं वैनतेय मनीषिभि रिति भविष्यपुराणात् । व्रतं गोस्वामिने मूल्यं प्रतिरूपं वा दत्वा करणीयम् । आदौ गोपतये दद्याद् गोमूल्यं साधु कल्पितम् । यथोत्पन्नेन तस्यास्तु चर्मणाच्छन्न विग्रह इति ब्रह्मपुराणात् । प्रमापणे प्राणभृतां दद्यात्तत् प्रतिरूपकम् । तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीद्यमइति पाराशरीयाच्च । प्रमापणे मरणे । उत्सर्ग वाक्यन्तु ॐअद्येत्यादि ब्राह्मणस्वामिक गोज्ञानकृतसाक्षाद्वधजनितपापक्षयकामो मनूक्तत्रैमासिकव्रतानुकल्पसप्तदशप्राजापत्यानुकल्पसप्तदशधेनुदानानुकल्पसप्तदशधेनुमूल्यलभ्य कांचनमग्निदैवतं यथानामगोत्राय ब्राह्मणायाहं ददे । मूल्ये कांचनपदप्रयोग इति शूलपाणिः । स्मार्तास्तु यत्र यद् द्रव्यं तत्र तन्नामोल्लिख्य देयम् । हिरण्यं गौ र्वासोऽश्वो भूमि स्तिला घृत मन्नमिति एतान्येवानादेशे विकल्पेन क्रियेरन् इतिगोतमेन गोर्वैकल्पिकत्वेन हिरण्यादिकमुक्तं न तु गोमूल्येनेत्याहुः ॥

पत्रदानेत्विदं लेख्यं पूर्वदिने सशिखवपनं कृत्वा घृतं प्राश्य उपोष्य परदिने स्नानादिकं विधाय ।

ॐ अद्येत्यादि ब्राह्मणस्वामिकगोज्ञानकृतसाक्षाद्वध जनितपापक्षयकाम त्रैमासिकव्रतानुकल्पसप्तदशप्राजापत्यानुकल्पसप्तदशधेनुदानानुकल्पसप्तदशधेनुमूल्यलभ्यकांचनमाग्निदैवतं ब्राह्मणायाहं ददे इत्यनेनोत्सृज्य दद्यात् ततः संप्रदानाय वृषभैकादशगास्तन्मूल्यं वा दक्षिणां दत्वा अच्छिद्रावधारणं कुर्यात्। प्रायश्चित्तानंतरं पार्वणविधिना श्राद्धं कर्तव्यं भोज्य दानं वा। असुकस्य मतमेतादिति।

यत्स्वामिकगोवधे यत्प्रायश्चित्तं तत्स्वामिकगर्भिण्यादिवधे द्विगुणं प्रायाश्चित्तमाह वृहस्पतिः। गर्भिणीं कपिलां दोग्ध्रीं होमधेनुं च सुव्रतां। दण्डादिना घातयित्वा द्विगुणं गो व्रतं चरेत्॥ दोग्ध्रीं वहुक्षीरां, गर्भिणीमात्रवधे प्रायश्चित्तद्वैगुण्यमिति शूलपाणिभवदेवसंमतं॥ स्मार्तास्तु सचेतनगर्भयुक्ताया वधे संपूर्णप्रायश्चित्तस्य द्वैगुण्यं, अन्यत्र तूत्पन्नादिभेदेन पादपादद्वयपादत्रययुक्तं संपूर्णं प्रायश्चित्तं। यथा वृद्धमनुः। गवान्निपातने चैव गर्भनाशो भवेद्यदा। एकैकं तु चरेत्कृच्छ्रं यथा पूर्वं तथा परम्। कृच्छ्रपदं संपूर्णव्रतपरं। तदेवपुनर्विशदयति। पादमुत्पन्नमात्रे तु द्वौ पादौ गात्रसंमिते। पादोनं कृच्छ्रमाचष्टे हत्वा गर्भं सचेतन

म् ॥ अंगप्रत्यङ्गसंपूर्णे गर्भे चेतनयान्विते । द्विगुणं गोव्रतं कुर्यात्प्रायश्चित्तं विशुद्धय इत्याहुः। भवदेवेन ह त्वा गर्भमचेतनमित्यं तं पठित्वा यदि लगुडादिघा तेन गौर्जीवति गर्भमात्रपातो भवति तदोत्पन्नग र्भादिक्रमेण एकद्वित्रिपादसंपूर्ण म्प्रायश्चित्त मुक्तं स्मार्त्तैः तदनुमोदितमिति ॥

अतिवृद्धादिवधेऽर्द्धप्रायश्चित्तमाह बृहस्पतिः। अति वृद्धा मतिकृशा मतिबालां च रोगिणीं। हत्वा पूर्व वि धानेन चरेदर्द्धव्रतं द्विजः॥ पूर्वविधानेन मन्वाद्युक्त त्रैमासिकादिना। अतिवृद्धा तृणच्छेदनासमर्था, अति कृशा दोहनवाहनायोग्या, अतिबाला द्विवर्षीया । यथा ङ्गिराः। वर्षमात्रा तु बाला स्यादतिबाला द्विवार्षि की। अतः परंतु सा गौः स्यात्तरुणी दंतजन्मनि॥अत एव वक्ष्यते द्विपादस्तु द्विहायने इति।एतेन यत्संपूर्ण व्रत मुक्तं तत्पुष्टितारुण्यादियुक्तायां गवि बोद्धव्यम्॥

अथैकहायन्यादिवधे प्रायश्चित्तमाह वृद्धप्रचेताः। एकवर्षे गवि हते कृच्छ्रपादो विधीयते । अबुद्धिपूर्व पुंसः स्याद्द्विपादस्तु द्विहायने। त्रिहायने त्रिपादःस्या त्प्राजापत्यमतः परम्। अतःपरं चतुर्हायनादावित्यर्थः। इदमपि प्रायश्चित्तं लाघवेनाबुद्धिपूर्वकाधमशूद्र

स्वामिकगोवधविषयमितिशूलपाणिः। तेन यत्स्वामिकगोवधे यत्प्रायश्चित्तं ज्ञानकृते ऽज्ञानकृते वा उक्तं तस्यैव पादादिकमूहनीयमिति स्मार्तेन स्पष्टीकृतं॥

एकप्रयत्ननिष्पन्ने बहूनां गवां वधे गुर्वेकपापजनकत्वात् प्रायश्चित्तद्वैगुण्यं, न तत्र तंत्रता पापभेदाभावादिति। यथासंवर्तः। व्यापन्नानां बहूनां च बंधने रोधने पिवा। भिषङ्मिथ्योपचारे च द्विगुणं गोव्रतं चरेत्। बहूनामेकाधिकानामिति स्मार्ताः। अपिशब्दाद्गृहदाहादिपरिग्रहः। क्रमकृते तु प्रयत्नभेदात्प्रायश्चित्तावृत्तिः स्यादेव। यथोपपातकानुवृत्तौ यमः गोघ्नवद्विहितः कल्पश्चांद्रायणमथापि वा। अभ्यासे तु तयोर्भूयस्ततः शुद्धि मवाप्नुयात् इति। गोघ्नवदिति गोवधे यत्त्रैमासिकादि व्रतमुक्तं तदुपपातकान्तरेपि वोध्यम्। तयो र्गोवधतदन्योपपातकयोः प्रकृतिभूतयोरित्यर्थः॥

बहुभिरेकस्यागो र्हनने यत्र यद्विहितं व्रतं तत्र तस्यैव पादं पादं प्रत्येकं करणीयं। यथा संवर्तः। एका चे द्बहुभिः कापि दैवाद्व्यापादिता भवेत्। पादंपादञ्च हत्याया श्चरेयुस्ते पृथक् पृथक्॥ अत्रैकाचेदित्युपलक्षणम् द्वयो र्बहूनां च हनने प्रतिपुरुषं पादद्वयं

पादत्रयादिकं करणीयम्। दैवादज्ञानतः। कामत श्चे द्बहूना मपि प्रत्येकं कृत्स्नदोषसंबन्धात् संपूर्णं प्रायश्चित्तं। एकां घ्नतां बहूनां च यथोक्ताद् द्विगुणो द म इतिप्रत्येकं दण्डद्वैगुण्यदर्शनात् दण्डवत्प्रायश्चि त्तानि भवंतीति न्यायात्संपूर्णम्प्रायश्चित्तं करणीय मिति मिताक्षरा। स्मार्तास्तु एकाधिकानामेकप्रय त्नेन बहुभिर्वधे व्यापन्नानां बहूनामिति पूर्वोक्तवचना देकैकपुरुषस्याद्विपादं द्विपादं कृत्वा प्रायश्चित्तं। प्रय त्नभेदे तु गोघ्नवदित्यनेन तंत्रताया अभावात् प्रत्येकं प्रतिपुरुषं पादद्वयावृत्ति रित्याहुः। दैवादि ति विशेषणादकामकृते इदं। कामकृते तु द्वैगुण्यमि ति दिक्। एकां घ्नतामिति वचनं गोवधातिरिक्तप रम् अतएव शूलपाणिना मनुष्यवधप्रकरणे त्विदं लि खितम्। बहुभिरित्युपादानात् द्वाभ्यां हनने संपूर्ण प्रा श्चित्तमिति स्मार्ताः। अत्यंतपीडितमरणावस्थाप न्नोन्मत्तादिगोवधे यथोक्तप्रायश्चित्तबोधकं यम वचनमाह भवदेवः क्लांतमजानमुन्मत्तं प्रमत्तं व्या धि पीडितम्। अंधं बालंतमोरूढं हत्वा पादं समा चरेदिति॥

अथैकहायन्यादिक्रमेणसंक्षेपतःप्रायश्चित्तधेनुनि

र्णयः। तत्र ज्ञानकृतब्राह्मणस्वामिकैकहायनीगोवधे स
पादचतस्रो धेनवः। द्विहायनीवधे च सार्धाष्टौ धेनवः।
त्रिहायणीवधे पादोन त्रयोदश धेनवः। चतुर्हायणीवधे
सप्तदश धेनवः। अज्ञानतः सर्वत्रार्द्धमिति। ज्ञानतः क्ष
त्रियस्वामिकैकहायनीवधे तिस्रो धेनवः। द्विहाय
नीवधे षट् धेनवः। त्रिहायणीवधे नव धेनवः। चतु
र्हायणीवधे द्वादश धेनवः। अज्ञानतः सर्वेषामर्द्धमि
ति। ज्ञानकृतवैश्यस्वामिकैकहायनीवधे द्वे धेनू। द्विहाय
नीवधे चतस्रो धेनवः। त्रिहायणीवधे षट् धेनवः।
चतुर्हायणीवधेऽष्टौ धेनवः। अज्ञानतः सर्वेषामर्द्धमिति।
ज्ञानतः शूद्रस्वामिकैकहायनीवधे धेनुरेका। द्विहाय
नीवधे द्वे धेनू। त्रिहायणीवधे तिस्रो धेनवः। चतुर्हाय
णीवधे चतस्रो धेनवः। अज्ञानतः सर्वत्रार्द्धम्
इति। अधमशूद्रकैवर्त्तादिस्वामिकैकाद्वित्रिचतुर्हा
यणीवधे यथाक्रमं पादद्विपादत्रिपादप्राजापत्य
मिति। एतदज्ञानतः। ज्ञानतो द्वैगुण्यं वोध्यम्।
चतुर्हायण्यादिवधे यादृशं प्रायश्चित्तं ज्ञानतोऽज्ञा
नतो वा उक्तमित्यातिवृद्धातिकृशातिरोगिणी चेत्त
दर्द्धम्॥

अथबुद्धिपूर्वकैकप्रयत्नजनितबह्वेकहायन्यादिगोव

धे धेनुनिर्णयः॥ तत्र ब्राह्मणस्वामिकवल्हेकहायनीवधे। सार्द्धाष्टौ धेनवः। वहुद्विहायनीवधे सप्तदश धेनवः वहुत्रिहायणीवधे सार्द्धपञ्चविंशतिर्धेनवः। वहुचतुर्हायणीवधे चतुस्त्रिंशत्। अज्ञानतोऽर्द्धं। क्षत्रियस्वामिकवह्वेकद्वित्रिचतुर्हायणीवधे क्रमेण षट् द्वादशाष्टादश चतुर्विंशति र्धेनवः। वैश्यस्वामिकवह्वेकद्वित्रिचतुर्हायणीवधे क्रमेण चतस्रोऽष्ट द्वादश षोडश धेनवः। शूद्रस्वामिकवह्वेकद्वित्रिचतुर्हायणीवधे क्रमेण द्वि चतुः षडष्टौ। अधमशूद्रकैवर्तादिस्वामिकवल्हेकद्वित्रिचतुर्हायणीवधे एकद्वित्रिचतस्रो धेनवः। अज्ञानतोऽर्द्धमूहनीयमिति। तथा वहुकर्तृकैकहायन्यादिवधे पादं पादं प्रत्येकं पुरुषेण कर्तव्यं। अज्ञानतोऽर्द्धमूहनीयं। क्रमकृते तु व्यापारभेदात्तंत्रानङ्गीकाराच्च व्यक्तिभेदेन प्रायश्चित्तावृत्तिरिति। एवमेकव्यापारेण यद्वहुहनने यत्प्रायश्चित्तं तस्य द्वैगुण्यमित्युक्तं। अन्यैकव्यापारेण अन्यवहुहनने तद्द्वैगुण्यावृत्तिरिति गर्भिणीकपिलादोग्ध्री होमधेनु वधे द्वैगुण्यं प्रायश्चित्तस्य। यथा ज्ञानतो ब्राह्मणस्वामिकगर्भिण्यादिवधे चतुस्त्रिंशद्धेनवः। क्षत्रियस्वे चतुर्विंशतिः। वैश्यस्वे षोडश। शूद्रस्वेऽष्टौ।

ज्ञानतोऽधमशूद्रस्वामिकसचेतनगार्भिण्यादिवधे च तत्नोधेनवः। अज्ञाने त्वर्द्धमेतेषाम्। स्मार्तास्तु ज्ञानतोब्राह्मणस्वामिकोत्पन्नमात्रगार्भिणीवधे सपादैकविंशतिर्द्धेनवः। ब्राह्मणस्वामिकज्ञानकृतगात्रावयवोत्पन्नगार्भिणीवधे सार्द्धपञ्चविंशतिर्द्धेनवः। ज्ञानतो ब्राह्मणस्वामिकसर्वगात्रनिष्पन्नचैतन्यहीनगार्भिणी वधे पादोनत्रिंशद्धेनवः। ब्राह्मणस्वामिकचैतन्ययुक्त ज्ञानकृतगार्भिणीवधे चतुस्त्रिंशद्धेनवः। अज्ञानेत्वर्द्धम् ॥ ज्ञानतः क्षत्रियस्वामिकोत्पन्नमात्रगार्भिणीवधे पञ्चदश धेनवः। ज्ञानतः क्षत्रियस्वामिकगात्रावयवोत्पन्नगार्भिणी वधेऽष्टादश धेनवः। ज्ञानतः क्षत्रियस्वामिकसर्वगात्रनिष्पन्नचैतन्य हीनगार्भिणीवधे एकविंशतिर्द्धेनवः। ज्ञानतः क्षत्रियस्वामिकचैतन्ययुक्तगार्भिणीगोवधे चतुर्विंशतिर्द्धेनवः। अज्ञाने त्वर्द्धम् ॥ वैश्यस्वामिकज्ञानकृतोत्पन्नमात्रगार्भिणीवधे दश धेनवः। वैश्यस्वामिकज्ञानकृतगात्रावयवोत्पन्नमात्रगार्भिणीवधे द्वादश धेनवः। ज्ञानतो वैश्यस्वामिकसर्वगात्रनिष्पन्नचैतन्यहीनगार्भिणीवधे चतुर्द्दश धेनवः। ज्ञानतो वैश्यस्वामिक चैतन्ययुक्तगार्भिणीवधे षोडश धेनवः। अज्ञानेत्वर्द्धम् ॥ ज्ञानतः

शूद्रस्वामिकोत्पन्नमात्रगर्भिणीवधे पञ्च धेनवः। ज्ञानतः शूद्रस्वामिकगात्रावयवोत्पन्नगर्भिणीवधे षट् धेवनः। ज्ञानतः शूद्रस्वामिकसर्वगात्रनिष्पन्नचैतन्यहीनगर्भिणीवधे सप्त धेनवः। ज्ञानतः शूद्रस्वामिकचैतन्ययुक्तगर्भिणीवधेऽष्टौ धेनवः। अज्ञाने त्वर्द्धम्। एवं ज्ञानतोऽधमशूद्रस्वामिकोत्पन्नमात्रगार्भिणीवधे सार्द्धधेनुद्वयम्। ज्ञानतोऽधमशूद्रस्वामिकगात्रावयवोत्पन्नगर्भिणीवधे तिस्रो धेनवः। ज्ञानतोऽधमशूद्रस्वामिकसर्वगात्रनिष्पन्नचैतन्यहीनगर्भिणीवधे सार्द्धतिस्रो धेनवः। ज्ञानतोऽधमशूद्रस्वामिकचैतन्ययुक्तगर्भिणीवधे चतस्रो धेनवः। अज्ञाने त्वर्द्धं सर्वत्र॥ ब्राह्मणस्वामिकगर्भिण्या गोर्हनने यदि गौर्जीवति गर्भमात्रपातो भवति तदा ज्ञानत उत्पन्नमात्रगर्भपाते सपादचतस्रो धेनवः। ब्राह्मणस्वामिकावयवनिष्पन्नगर्भपाते ज्ञानतस्साद्धोष्टौ धेनवः। ब्राह्मणस्वामिकज्ञानकृतसर्वगात्रनिष्पन्नचैतन्यरहितगर्भपाते पादोनत्रयोदश धेनवः। ज्ञानतो ब्राह्मणस्वामिकचैतन्ययुक्तगर्भपाते सप्तदश धेनवः। अज्ञाने त्वर्द्धम्॥ ज्ञानतः क्षात्रियस्वामिकोत्पन्नमात्रगर्भनिपाते तिस्रो धेनवः ज्ञानतः क्षत्रियस्वामिका

वयवनिष्पन्नगर्भपातने षट् धेनवः। ज्ञानतः क्षत्रियस्वामिकसर्वगात्रनिष्पन्नचैतन्यहीनगर्भपातने नव धेनवः। ज्ञानतः क्षत्रियस्वामिकचैतन्ययुक्तगर्भपातने द्वादश धेनवः। अज्ञाने त्वर्द्धम् ॥ ज्ञानतो वैश्यस्वामिकोत्पन्नमात्रगर्भपातने द्वे धेनू ज्ञानतो वैश्यस्वामिकावयवनिष्पन्नगर्भपातने चतस्रो धेनवः । ज्ञानतो वैश्यस्वामिकसर्वगात्रनिष्पन्नचैतन्यहीनगर्भपातने षट् धेनवः ज्ञानतो वैश्यस्वामिकचैतन्ययुक्तगर्भपातने ऽष्टौ धेनवः। अज्ञाने त्वर्द्धम्॥ एवं ज्ञानतः शूद्रस्वामिकोत्पन्नमात्रगर्भपातने एका धेनुः। ज्ञानतः शूद्रस्वामिकावयवनिष्पन्नगर्भपातने द्वे धेनू ज्ञानतः शूद्रस्वामिकसर्वगात्रनिष्पन्नचैतन्यहीनगर्भपातने तिस्रोधेनवः। ज्ञानतः शूदस्वामिकचैतन्ययुक्तगर्भपातने चतस्रो धेनवः। अज्ञाने त्वर्द्धम्॥ज्ञानतोऽधमशूद्रस्वामिकोत्पन्नमात्रगर्भपातने प्राजापत्यार्द्धम्। ज्ञानतोऽधमशूदस्वामिकावयवनिष्पन्नगर्भपातने एका धेनुः। ज्ञानतोऽधमशूद्स्वामिकसर्वगात्रनिष्पन्न चैतन्यहीनगर्भपातने सार्द्धप्राजापत्यम् । ज्ञानतोऽधमशूद्रस्वामिकचैतन्ययुक्तगर्भपातने द्वे धेनू। अज्ञाने त्वर्द्धम् ॥ अत्यन्ताक्लिष्टाऽज्ञानोन्मत्ताप्रमत्ता अत्यन्तव्याधिपीडि

ता अन्धतमोरूढा एतासां हनने पादप्रायश्चित्त मिति भवदेवः । यथा ब्राह्मणस्वामिकज्ञानकृतात्यन्तक्लिष्टादिवधे सपादचतस्त्रो धेनवः ॥ क्षत्रियस्वामिकात्यन्तक्लिष्टादिज्ञानतोवधे तिस्त्रो धेनवः॥ ज्ञानतो वैश्यस्वामिकातिक्लिष्टादिवधे द्वे धेनू । ज्ञानतः शूद्रस्वामिकातिक्लिष्टादिवधे धेनुरेका। ज्ञानतोऽधम शूद्रस्वामिकात्यन्तक्लिष्टादिवधे प्राजापत्यार्द्धमिति । अज्ञानतस्सर्वत्रार्द्धमिति ॥ एवं द्वाभ्यामेकाहनने यद्वधे यत्प्रायश्चित्तमुक्तं प्रत्येकेन तत्करणीयम् । यथा ब्राह्मणस्वामिकैकहायनीवधे प्रत्येकं सपादचतस्त्रो धेनवः । ब्राह्मणस्वामिकद्विहायनीवधे प्रत्येकं सार्द्धाष्टौ धेनवः । ब्राह्मणस्वामिकात्रिहायणीवधे प्रत्येकं पादोनत्रयोदश धेनवः । ब्राह्मणस्वामिकचतुर्हायणी वधे प्रत्येकं सप्तदश धेनवः ॥ एवं क्षत्रियस्वामिकैकहायनीवधे प्रत्येकं तिस्त्रो धेनवः । द्विहायनीवधे प्रत्येकं षट् धेनवः।त्रिहायणी वधे प्रत्येकं नव धेनवः। चतुर्हायण्यादिवधे प्रत्येकं द्वादश धेनवः ॥ एवं वैश्यस्वामिकैकहायनीवधे प्रत्येकं द्वे धेनू । द्विहायनीवधे प्रत्येकं चतस्त्रो धेनवः। त्रिहायणीवधे प्रत्येकंषट् धेनवः । चतुर्हायण्यादिवधे प्रत्येकमष्टौ धेनवः ॥ एवं

शूद्रस्वामिकैकहायनीवधे प्रत्येकमेका धेनुः । द्विहायनीवधे प्रत्येकं द्वे धेनू। त्रिहायणी वधे प्रत्येकं तिस्रो धेनवः । चतुर्हायणीवधे प्रत्येकं चतस्रो धेनवः ॥ एवमधमशूद्रस्वामिकैकहायनीवधे प्रत्येकं प्राजापत्यार्द्धम् । द्विहायनीवधे प्रत्येकं धेनुरेका। त्रिहायणीवधे सार्द्धप्राजापत्यं प्रत्येकं। चतुर्हायण्यादिवधे प्रत्येकं द्वे धेनू। एवं द्वाभ्यां मिलित्वैकां हत्वाऽन्यव्यापारेणान्याहनने प्रायश्चित्तावृत्तिरेवं द्वाभ्याम् एकदा वहुहनने प्रत्येकं प्रायश्चित्तद्वैगुण्यम् । अत्राप्येकदा वहून् हत्वाऽन्यदा वहुहनने द्वैगुण्यप्रायश्चित्तावृत्तिरिति ॥

अथ वाचानिकदक्षिणानिर्णयः ॥ तत्र ज्ञानतो विप्रस्वामिकचतुर्हायण्यादिगोवधे त्रैमासिकव्रते वृषभैकादशागावोदक्षिणा । अज्ञाने च तदर्द्धव्रते गौरेका दक्षिणा । ज्ञानतोवैश्यस्वामिकचतुर्हायण्यादिगोवधव्रते द्वे धेनू दक्षिणा । अज्ञानतोऽर्द्धव्रते धेनुरेका दक्षिणा। अन्यत्र क्षत्रियशूद्रादौ वचनाभावाद्यथाशक्ति दक्षिणा । भवदेवस्तु क्षत्रियस्वामिकचतुर्हायनपुंगोवधे प्रायश्चित्तं कृत्वा वृषभो दक्षिणा । क्षत्रियस्वामिकचतुर्हायण्यादिस्त्रीगवीवधव्र

ते मृतवत्सा गौर्दक्षिणेत्याह । यत्र यद्दक्षिणा प्रोक्ता तद्द्वैगुण्याचरणे तद्वाद्विगुणा दक्षिणा कार्या द्विगुणे तु व्रते चीर्णे द्विगुणा दक्षिणा भवेत् इतिपूर्वोक्तवचनात् । यत्तु वैश्यं हत्वा त्रैवार्षिकं व्रतं चरेत् वृषभैकादशागाश्च दक्षिणान्दद्यात् इत्यभिधाय गाश्च वैश्यवदितिगोवधे त्रैवार्षिकं प्रायश्चित्तं गौतमेनोक्तं तदग्निहोत्रिणोवेदपारगस्य होमधेनोः कपिलाया गार्भिण्याः पुण्ये देशे काले वुद्धिपुर्वकवधे वोध्यम् । समं द्विगुणसाहस्रमानन्त्यं च यथा क्रमं । दाने फलविशेषःस्याद्धिंसायां तद्वदेवाहि ॥ इति दक्षवचनात् । एवंमुन्यन्तरोक्तानि लघुप्रायश्चित्तानि यानि तानि प्रयोजकानुग्राहकानुमन्तृनिमित्तिविषयाणि वोध्यानि ॥

अथ पञ्चविधवधित्वनिर्णयः ॥ चेतनान्तरव्यापाराव्यवधानेनैव वधनिष्पादकः कर्ता, योऽप्रवृत्तं पुरुषं वधार्थम्वेतनादिना स्वेच्छया प्रवर्तयाति प्रवृत्तं वा मन्त्रोपायेन प्रोत्साहयति वा स प्रयोजकः, एतं हन्मीति वाक्येऽनुमितिदाता र्निषेधक्षमोऽपि मौनावलम्वी चानुमन्ता, वध्यस्य पलायनादि निरोधकोऽनुग्राहकः, उद्देश्यत्वे सति हन्तुर्म्मन्यू

त्पादको निमित्ती, प्रयोजकादीनां व्यवहितमरणफलकानां पादपादहानिरिति शूलपाणिः। अष्टमाष्टमभागहानिरिति भवदेवः॥

अथ रोधादिनिमित्तकगोवधप्रायश्चित्तम्॥ तत्राङ्गिराः पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत्। योजने पादहीनं स्याच्चरेत्सर्वं न्निपातने॥ रोधः आहारप्रचारकाले निर्गमरोधः, बन्धनमयथाबन्धनमकालबन्धनं च। योजने हलशकटादियोजने अतिवाहादिनेतिशेषः। निपातने दण्डनिपातने, दण्डोऽत्र हस्तप्रमाणोग्राह्यः। अङ्गुष्ठमात्रस्थौल्येन बाहुमात्रप्रमाणतः। सार्द्रश्च सपलाशश्च दण्डइत्याभिधीयते॥अस्मादूर्द्ध्वप्रमाणेन यदि गां विनिपातयेत्। द्विगुणन्तु भवेत्तत्र प्रायश्चित्तमितिस्थितिः॥ इत्यङ्गिरोवचनात् सपलाशः सपत्रः, निपातने कूपावटादिनिपातनइति भवदेवः। वस्तुतोनिपातनपदमुभयपरं दण्डनिपातनं कूपावटादिनिपातनञ्च,अन्यथा एकस्य ग्रहणेऽन्यपाते प्रायश्चित्तस्यानध्यवसायापत्तेरिति, पादादिकन्तु प्राजापत्यस्यैव, यथा पराशरः रोधने तु चरेत्पादं बन्धने चार्द्धमेवतु। योजने पादहीनं स्यात्प्राजापत्यन्निपातने॥ बृहस्पतिः पादंचरेद्रोधवधे कृच्छार्द्धम्ब

न्धघातने । अतिवाहे च पादोनं कृच्छ्रमज्ञानताडने इत्याभ्यां सहैकवाक्यत्वादत्राज्ञानश्रुतेरवुद्धिपूर्वकवधविषयम् । अज्ञानं च क्षीणायामेवाक्षीणाभ्रमः। क्षैण्यज्ञाने तु प्रायिकस्मरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणपादादिकम् यथा हारीतः नासाछेदनदाहेषु कर्णच्छेदनवन्धने । अतिदोहातिवाहाभ्यां कृच्छ्रं चान्द्रायणं चरेत् ॥ हत्वेतिशेषः। कृच्छ्रं व्रतं, तेन चान्द्रायणव्रतमिति शूलपाणिः । भवदेवस्तु यत्स्वामिकगोवधेऽज्ञानतोयत्प्रायश्चित्तमुक्तं क्षीणाया गोरक्षीणाभ्रमे रोधनादिना वधे तस्यैव पादादिकङ्करणीयम् क्षैण्यज्ञाने तु ज्ञानकृतवधस्य पादादिकमाह। तन्मते प्रागुक्तपराशरवृहस्पतिवचनमधमशूद्रस्वामिकगोः क्षीणाया अक्षीणाभ्रमेण रोधादिनामरणविषयम्। चान्द्रायणवोधकहारीतवचनं ज्ञानकृतवैश्यस्वामिकरोधातिरिक्तगोवधाविषयमिति न किञ्चिदनुपपन्नमितियुक्तं पश्यामः ॥ शूलपाणिमते तु सर्वस्वामिकैकप्रायश्चित्तमिति महद्वैषम्यं दुष्परिहरणीयमिति वोध्यम् । यथा ज्ञानकृतशूद्रस्वामिकगोवधे प्राजापत्यचतुष्टयम् क्षैण्यज्ञाने तु चान्द्रायणमिति सुधीभिर्विभाव्यम् । अत्र वन्धनपदं यथा कथञ्चिन्निमित्त

मात्रपरम् । वृहस्पतिः शस्त्रादिना तु हत्वा गां मानवं व्रतमाचरेत् । रोधादिना त्वाङ्गिरसमापस्त म्बोक्तमेवच । इतिबृहस्पत्युक्तस्य शस्त्रादीत्यादिपदा त् मुष्टिलोष्टलगुडविषाग्न्यादीनां प्रायिकमृत्यु फलकानां ग्रहणम् । रोधादिनेति अत्र रोधादेर्य्यथा कथञ्चिन्निमित्तमात्रपरत्वेनेति शूलपाणिव्याख्या नात्, एतच्च रात्रौ रक्षणार्थं रोधनवन्धनव्यतिरिक्त विषयम् । सायं संयमनार्थन्तु न दुष्येद्रोधवन्धयोरि त्यङ्गिरोवचनात् । वन्धने विशेषमाह व्यासः न नारिकेलैर्न्नच तालशाणैर्न्नचापि मोञ्जैर्न्नच वद्धशृ ङ्खलैः । एतैश्च गावोनच वन्धनीया वधूवा तु ति ष्ठेत्परशुं गृहीत्वा ॥ काशैः कुशैश्च वध्नीयात्स्थाने दोषविवर्ज्जितइति ॥

शूलपाणिमतेऽत्रायं संक्षेपः क्षीणाया अक्षीणा श्रमे रोधनिमित्तकवधे प्राजापत्यस्य पादः । तत्र द्वादश पणाः । क्षीणाया अक्षीणाश्रमे वन्धननि मित्तकवध द्विपादः तत्र चतुर्विंशातिपणाः । क्षी णस्याऽक्षीणश्रमे हलादियोजने त्रिपादः तत्र षट् त्रिंशत्पणाः । क्षेण्याज्ञाने यथोक्तदण्डप्रहारान्मृते भी तिदर्शनात्कूपादौ निमज्य मृते वा प्राजापत्यम् । तत्र

धेनुरेका तत्राष्टचत्वारिंशत्पणाः। क्षैण्यज्ञाने तु रोधने चान्द्रायणस्य पादस्तत्र द्वे धेनू। क्षैण्यज्ञाने तु वन्धने द्विपादः चान्द्रायणस्य तत्र चतस्रो धेनवः। क्षैण्यज्ञाने योजने हलादौ त्रिपादस्तत्र षट् धेनवः। क्षैण्यज्ञाने यथोक्तदण्डप्रहारादिना मृते चान्द्रायणं तत्राऽष्टौ धेनवः। परिमाणाधिकदण्डप्रहारादिना मृते क्षैण्याज्ञाने प्राजापत्यद्वयम् तत्र द्वे धेनू। परिमाणाधिकदण्डप्रहारान्मृते क्षैण्याज्ञाने तु चान्द्रायणद्वयं तत्र पञ्चदश धेनवइति। चान्द्रायणं यथा पराशरः एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले तु वर्द्धयेत्। उपस्पृशँस्त्रिषवणमेतच्चान्द्रायणं स्मृतम्॥ एवमेव विधिं कृत्समाचरेद्यवमध्यमं। शुक्लपक्षादिनियतं चरेच्चान्द्रायणं व्रतम्॥ याज्ञवल्क्यः तिथिवृद्ध्याचरेत्पिण्डान् शुक्ले शिख्यण्डसम्मितान्। एकैकंह्रासयेत्कृष्णे कृच्छ्रं चान्द्रायणं चरेत्॥ पिण्डं ग्रासं। कृष्णपक्षादिपिपीलिकामध्यं शुक्लपक्षादि यवमध्यमिति चान्द्रायणव्रतं सार्द्धसप्तधेनुदानसमानं सवृषा गौर्दक्षिणा। चान्द्रायणे ततश्चीर्णे कुर्याद्ब्राह्मणभोजनं। अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम् इतिमनुवच

नात् । उत्सर्गवाक्यन्तु ओं अद्येत्यादिब्राह्मणस्वामिकक्षीणाया गोरक्षीणावुद्धिकृतरोधनिमित्तकवधजन्यपापक्षयकामः पराशरोक्तधेनुपादमूल्यलभ्यकाञ्चनं वह्निदैवतं ब्राह्मणायाहन्ददे ॥

पत्रदाने तु पूर्व्वदिनेऽङ्गलोमवपनं कृत्वा घृतं प्राश्योपोष्य परदिने स्नात्वा ब्राह्मणस्वामिकक्षीणाया गोरक्षीणाबुद्धिकृतरोधनवधजन्यपापक्षयकामनया प्राजापत्यपादप्रायश्चित्तङ्करणीयं यथाशक्ति दक्षिणा भोज्यदानञ्चेति अमुकस्य मतमेतत् अन्यत्राप्यूहेनोत्सर्गवाक्यम्बोध्यं पत्रदानंचेति ॥

अथास्थ्यादिभङ्गप्रायश्चित्तम् ॥ तत्र भवदेवभट्टधृतं यमवचनम् अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा । पाटने कर्णशृङ्गाणां मासार्द्धन्तु यवान् पिवेत् ॥ स्मृतिसारे गोभिलः कर्णलाङ्गूलयोश्छेदमास्थिभङ्गाम्विधाय च । प्राजापत्यव्रतङ्कुर्युश्चत्वारो ब्राह्मणादयः ॥ अत्र शूद्रस्य द्विजतुल्याभिधानं वैश्यतुल्यशूद्रपरं । इदन्तु गोरमरणे षण्मासोपरि कर्तव्यम् । षण्मासाभ्यन्तरमरणे तु संपूर्णं प्रायश्चित्तं करणीयं षण्मासादिजीवने शृङ्गभङ्गप्रायश्चित्तसिद्धिरितिस्मार्त्ताः ॥ यथायमः शृ

ङ्गभंगेऽस्थिभंगे च कटिभंगे तथैव च । यदि जीवति षण्मासान् प्रायश्चित्तन्न विद्यते ॥ अस्यार्थः षण्मासोपरि मरणे तन्निमित्तकं प्रायश्चित्तन्न विद्यत इत्यर्थः । अस्थिभंगादिनिमित्तकप्रायश्चित्तम्भवत्येव । षण्मासाभ्यन्तरे मरणे तद्वधनिमित्तकं विद्यत एव । स्मृतिसारे गोभिलः मुष्कमोषकरो विप्रो गोवधस्य व्रतञ्चरेत् । प्रयोजकस्तु कुर्वीत व्रतस्यार्द्धम्विशुद्धये ॥ मुष्कमोषकरोऽण्डनाशकरः । हलैर्वा शकटैर्वापि वाहयेद्योवृषं स्वयम् । प्राजापत्यद्वयं कुर्याद् द्विगुणं योषितां गवाम् ॥ वृषभम्वा समुत्सृष्टं कपिलां वापि कामतः । योजयित्वा हले कुर्याद्व्रतञ्चान्द्रायणद्वयम् ॥

अत्रायं संक्षेपः । अत्र कपिलोत्सृष्टवृषभयोर्वाहने तुल्यप्रायश्चित्तदर्शनात् अतः कपिलाया वधे यत्प्रायश्चित्तमुक्तमुत्सृष्टवृषभवधे तत्कर्तव्यम् । किन्त्वयं विशेषः वृषभस्योत्सृष्टत्वेन स्वत्वाभावेपि भूतपूर्वस्वत्वमाश्रित्य स्वामित्वं कल्प्यम् । तस्माद्भूतपूर्वस्वत्वाश्रयीभूतयत्स्वामिकगोवधे यत्प्रायश्चित्तं तत्स्वामिकस्य गोवधस्य द्विगुणं प्रायश्चित्तम् ॥ अस्थिभङ्गादिकरणे षण्मासाभ्यन्तरे गोर्म्मरणे पूर्वोक्तस्वा

मिभेदेन एकहायन्यादिक्रमेण प्रायश्चित्ताचरणम्॥ षण्मासोपरि मरणे जीवने वा प्राजापत्यं वाचनिकम त्रैका धेनुः । एवमण्डनाशकरणे पूर्वोक्तस्वामिभेदेन एकहायन्यादिक्रमेण च प्रायश्चित्तं करणीयम् ॥ प्रयोजकस्य तदर्द्धम् ॥ स्वयं वृषभवाहने द्वे धेनू । योषिद्गवीवाहने चतस्रो धेनवः । उत्सृष्टवृषभवाहने पञ्चदश धेनवः । एवङ्कपिलावाहनेऽपि पञ्चदश धेनव इति ॥ उत्सर्गवाक्यन्तु ॐ अद्येत्यादि गवास्थिभङ्गजनितपापक्षयकामइमान्धेनुं रुद्रदैवतां ब्राह्मणायाऽहन्ददे ॥

पत्रदाने तु पूर्वदिने सशिखवपनं कृत्वा घृतं प्राश्योपोष्य परदिनेऽस्थिभंगजनितपापक्षयकामेन धेनुदानं करणीयम् यथाशक्ति दक्षिणा देया। श्राद्धं भोज्य दानञ्च करणीयम् । अमुकस्य मतमेतत् ॥ एवं मुष्कनाशादावूहेन लेख्यम् । लिंगस्य छेदने मृत्यौ मध्यमोमूल्यमेव चेति याज्ञवल्क्येन मृत्युलिंगच्छेदनयोस्तुल्याभिधानात्प्रायश्चित्तेऽपि तथेति मध्यमोमध्यमदण्डः ॥ यथा अशीतिपणसाहस्रं दंडउत्तमसाहसः । तदर्द्धम्मध्यमःप्रोक्तस्तदर्द्धमधमस्स्मृतइति॥

अथापालनगोवधप्रायश्चित्तनिर्णयः ॥ तत्राऽवि

भक्तानाम्भ्रातॄणाम्मध्ये सर्वानुमत्यैकेन प्रायश्चित्ता चरणे सर्वेषां पापक्षयान्न पृथक् प्रायश्चित्ताचरण म । भ्रातॄणामविभक्तानामेको धर्म्मः प्रवर्तते । विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक् पृथगिति नारदवचनात् पञ्चमहायज्ञादौ तथा दर्शनाच्च । तथा युधिष्ठिरम्प्रति व्यासवाक्यं अश्वमेधो हि राजेन्द्र पावनः सर्वपाप्मनाम् । तेनैवेष्ट्वा विपाप्मा त्वं भविता नात्र संशयः॥ तत्रैव भगवद्वाक्यम् भीमसेनार्ज्जुनौ चैव तथा माद्रवतीसुतौ । इष्टवन्तोभविष्यन्ति त्वयीष्टवति पार्थिव इति युधिष्ठिरकृतप्रायश्चित्तेन सर्वेषाम्पापनाशदर्शनादिति ॥ अथ प्रायश्चित्तन्तत्र पराशरः। शीतानिलहता चैव उद्बन्धनमृतापि वा । शून्यागाराद्युपेक्षायां प्राजापत्यं विनिर्द्दिशेत् ॥ अपालनाद्विनश्येत्तु गौश्चरन्ती कथञ्चन। जलौघपल्वले मग्ना नागविद्युद्धतापि वा॥ श्वभ्रे वा पतिताकस्माच्छ्वापदै र्भक्षिताऽपि वा । प्राजापत्यश्चरेत्कृच्छ्रं गोस्वामी व्रतमुत्तमम्॥ सशिखम्वपनं कार्यन्त्रिसन्ध्यमवगाहनम् । शृंगैर्वापि खुरैर्युक्तं लांगूलश्रवणादिभिः॥ आर्द्रमेव हि तच्चर्म्म परिधाय सगाम्व्रजेत् । तासाम्मध्ये वसेद्रात्रौ दिवा

ताभिस्समम्व्रजेत् ॥ ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः । प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् ॥ अनडुत्सहितां गाश्च दद्याद्विप्राय दक्षिणाम् ॥ अत्र गोस्वामीत्युपादानादुत्सृष्टवृषभवत्सतरीषु स्वत्वाभावादपालननिमित्तवधे उत्कृष्टदोषोनास्तीति प्रतीयते । एवं गृहदाहादावप्युत्सृष्टवृषभवत्सतरीष्वेषा व्यवस्था । अत्र स्मार्त्ताः । अत्रेतिकर्तव्यतासहितप्राजापत्याकरणे धेनुद्वयदानम् वृषोगौश्चदक्षिणा । एषा च शूद्रस्वामिकेतरविषया, शूद्रस्वामिकस्याज्ञानात्साक्षाद्वधे यत्किञ्चिद्दक्षिणाककृच्छ्रद्वयविधानात् । अपालनवधे तदधिकस्यायुक्तत्वात्तत्तुल्यङ्कृच्छ्रद्वयमित्याहुः ॥ शूलपाणिप्रभृतिस्त्वितिकर्तव्यतायां शेषन्नादृतवान् तन्मते इतिकर्तव्यतासहितप्राजापत्यम् । तदशक्तौ धेनुरेका सवृषभागौर्द्दक्षिणा । एतच्च पालकासमर्पणे ॥ पालकसमर्पणे तु पालकस्यैव दोषो न स्वामिन इति । अत्र स्मार्त्ताः शूलपाण्यादीनाम्मते प्राजापत्यम्विनिर्द्दिशेत् प्राजापत्यञ्चरेदिति प्राजापत्यपादस्य पौनरूक्त्यं दुष्परिहरणीयम् ॥ अत्र केचित् पूर्ववचनं पालकसमर्पणे पालकस्य प्रायश्चित्तविषयम् । उत्तरवचनं पालकास

मर्पणे स्वामिविषयम् तत्र स्वामि पदोपादानादतो न पौनरुक्त्यमित्याहुः ॥ वस्तुतः शूद्रस्वामिकसाक्षाद्गोवधे इतिकर्तव्यतासहितप्राजापत्यरूपव्रतानुपदेशादपालनवधे इतिकर्तव्यतासहितप्राजापत्यस्यायुक्तत्वात् पूर्ववचनं यत्किञ्चिद्दक्षिणाककेवलप्राजापत्यव्रतं केवलशूद्रस्वामिकपरम् । परवचनं पूर्णदक्षिणाकेतिकर्तव्यतासहिताद्विजस्वामिपरम् प्राजापत्यव्रतमिति न पौनरुक्त्यं । नवाऽज्ञानकृतगोवधाच्छूद्रस्याधिक्यमिति ॥ एतच्च पालकासमर्पणे । पालकसमर्पणे तु पालकस्यैव दोषो न स्वामिनइति । तथा वृहस्पतिः अनागतस्य चानेता आगतस्य च रक्षिता । रात्रावपि यदान्योस्ति तदा स्वामी न दोषभाक् ॥ मनुः दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे । योगक्षेमोन्यथाचेत्तु पालो वक्तव्यतामियात् ॥ अस्यार्थः दिवा पालकहस्तन्यस्तानांगवां योगक्षेमविषये दोषे जाते पालकस्य गर्हणीयता । रात्रौ पुनः पालकसमर्पितानां स्वामिनोऽदोषः । अन्यथा दिवा रात्रावपि यदा पालकहस्तगता भवन्ति तदा पालक एव दोषभागी न स्वामीत्यर्थः॥ अशक्तपालकसमर्पणे स्वामिनो दोषमाह हारीतः दमने दामने चैव संघाते चैव

योजने । स्तम्भशृंखलपाशैर्वा मृते पादोनमाचरेत् ॥ अत्रापि प्राजापत्यस्य पादोनम्बोद्धव्यम् ॥ अशक्तपालकसमर्पणे सम्यक्पालनाभावे श्वापदादिनिपाताद्गोर्मरणे स्वामिनो दोष माह विष्णुः पल्वलौघवृकव्याघ्रश्वापदादिनिपातने । श्वभ्रोद्बन्धन सर्पाद्यैर्मृते पादोनमाचरेदित्यादिपदात् इक्षुतैलयंत्रार्थमाहारन्दत्वा संन्निधौ रक्षणे दैवाद्गृहदाहभङ्गाभ्यां मरणस्य ग्रहणं। प्राजापत्यस्यैव पादोनं पूर्वेण सहैकवाक्यत्वात्। तथा च मनुः घण्टाभरणदोषेण गवां यत्र विपद्भवेत्। चरेदर्द्धव्रतन्तत्र भूषणार्थं कृतं हि तत् ॥ शङ्कारहितस्थाने शक्तपालकसत्वेप्याह यमः । कान्तारेष्वथवा दुर्गे गृहदाहे वटेषु च।यदि तत्र विपत्तिः स्यात्पाद एको विधीयते ॥ तथा एकहायन्यादिवधे त्वाह यमः पादश्चाप्राप्तके देयो वत्से स्वामिन्यरक्षिते । अप्राप्तकेऽप्राप्तदम्यावस्थे त्रिहायनपर्यन्तमितियावत् । एवं श्वभ्रादिपाते स्वामिना प्राजापत्यपादः कार्यः । अत्र पादमात्रश्रवणाद्बालकत्वादिना नानुग्रहः कार्यः। म्लेच्छस्थले गोर्विनिमये चान्द्रायणं, यदि तेन वधः क्रियते तदा ज्ञानकृतवधप्रायश्चित्तं । विक्रयै

गोंविनिमयैर्दत्वा गोमांसखादके । व्रतश्चान्द्रायणङ्कुर्याद्वधे साक्षाद्वधी भवेत् इतिगोभिलवचनात् । गोमांसखादके यवनादौ । चान्द्रायणपादं शिशुचान्द्रायणपरं, तत्र पादोनधेनुचतुष्टयपरं पापस्य लघुत्वात् ॥ शिशुचान्द्रायणं यथा चतुरः प्रातरश्नीयात्पिण्डानपि समाहितः । चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम् ॥

अथ पालकस्य प्रायश्चित्तनिर्णयः ॥ अविभक्तपालकानामेकेन प्रायश्चित्तं करणीयं ॥ विभक्तानां पादं पादम् ॥ वहूनां गवामपालनवधे द्विगुणम् । अत्रापि वहुकर्तृके तु प्रत्येकं द्विगुणमिति ॥ पालकस्य द्रव्याभावे स्वामिना द्रव्यन्दत्वा प्रायश्चित्तङ्कारयितव्यम् स्वेन वा करणीयं ॥ म्लेच्छपालके तु स्वामिना कर्त्तव्यमिति ॥

अथ गोवधापवादः ॥ तत्र संवर्त्तः यन्त्रणे गोचिकित्सायां मूढगर्भविमोचने । यत्ने कृते विपत्तिः स्यात्प्रायश्चित्तन्न विद्यते ॥ औषधं स्नेहमाहारं दद्द्गोब्राह्मणेषु च । प्राणिनां प्राणवृत्त्यर्थं प्रायश्चित्तन्न विद्यते ॥ दाहच्छेदशिराभेदं प्रयत्नैरुपकुर्वताम् । विजानतां गोहितार्थे प्रायश्चित्तं न विद्यते ॥ द्विजा

नाङ्गोहितार्थे वा इतिपाठान्तरम् ॥ मूढगर्भोऽन्त र्मृतगर्भः । मुह्वैचित्ये क्तः मूढः ॥ देवद्रोण्यां विवा हे च कूपेष्वायतनेषु च । एषु गोषु विपन्नासु प्राय श्चित्तं न विद्यते ॥ देवद्रोणी स्वयम्भूलिङ्गाद्यवस्था नगह्वरः । विवाहो गवां मैथुनम् । आयतनं सीमानि वन्धस्थानं सेत्वादि । अत्र कूपायतनकर्त्तुर्द्दोषाभा वो न तु गोस्वामिनइति ॥ सायं संयमनार्थन्तु न दुष्येद्रोधवन्धयोः । पङ्कलग्नाग्निदाहेषु प्रायश्चि त्तन्न विद्यते ॥ इदम्वचनं पालकसत्वे वोध्यम् ॥ मू र्छितः पतितो वापि यदि दण्डाहतः पशुः । उत्थि तस्तु यदा गच्छेत्पञ्च सप्त दशाथवा ॥ ग्रासम्वा य दि गृह्णीयात्तोयम्वापि पिवेद्यदि । पूर्वव्याधिवि नष्टानां प्रायश्चित्तन्न विद्यते ॥ अस्यार्थः । यदि व्याधियुक्तानां गवां दण्डाद्यभिघातेन मूर्छया प तनं भवति तदनन्तरं गमनग्रासादौ कृते मृत्युर्भ वति तदा गमनग्रासतोयपानैस्तदानीन्तनमरणहेतु त्वाभावन्निश्चित्य पूर्वव्याधिविनष्टान्न प्रायश्चि त्तम् ॥ यदि तु पूर्वव्याधिरहित एव प्रहारजनितव्या धिना ग्रासादिकं कृत्वाऽपिम्रियते तदा प्रायश्चित्त मस्त्येव । अग्निम्प्रज्वाल्य तत्र स्थितस्य दैवात्तद

ग्निनाऽवद्धस्य गोर्म्मरणे दोषाभावमाह पराशरः ॥ कूपे खाते च धर्म्मार्थे गृहदाहे च या मृता । ग्राम दाहे तथा घोरे प्रायश्चित्तन्न विद्यते ॥ चर्म्मनि र्म्मोचने प्रायश्चित्तापवादमाहाङ्गिराः । अन्यत्रा ङ्कनलक्ष्मभ्यां वाहनिर्म्मोचने कृते । अङ्कनं त्रि शूलादिकरणम्, लक्ष्म स्थिरतरचिह्नकरणम्, वाह निर्म्मोचनं वाहेनेन चर्म्मनिर्म्मोचनं । एतत्त्रितय कार्यातिरिक्ते चर्मनिर्म्मोचने प्रायश्चित्तमस्त्येव । स्मृतिसारे त्वङ्गिराः अरक्षिते तु कूपादौ मृते व्या घ्रादिभक्षिते । व्रतार्द्धमाचरेत्स्वामी रक्षिते नास्ति दूषणम् ॥ रक्षित इति प्रमत्ता गौर्यदि निवारय न्तं पालकमतिक्रम्य कूपादौ मृता तदा नेत्यर्थः । शङ्कारहितस्थले पालके दोषाभावमाह बृहस्प तिः । यदा चरेत्तु विपिने निर्भये वृकवर्ज्जिते । आगत्य वृकव्याघ्राद्यैः खादिते नास्ति दूषणमि ति ॥ नारदः । राजगृहे गृहीतो वा वज्राशनिहतोऽ पि वा । अथ सर्प्पेण वा दष्टो वृक्षाद्वा पतितो भवे त् ॥ व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः । न तत्र दोषः पालस्य न च दोषश्च गोमतामि ति ॥ पराशरः । ग्रामघाते शरौघेण वेश्मभङ्

गादिपातने । अतिवृष्टिहतानाञ्च प्रायश्चित्तन्न विद्यते ॥ इदञ्च विना वन्धं पालकसत्वे वोध्यम् ॥ प्रायश्चित्तपरीक्षणमाह हारीतः ॥ स्वशिरसा यव समादाय … गृह्णीयुरथैनं … प्रायश्चित्तं, … दि गावस्तद्दत्त… र णीयमिति …

अथ गवे… ह यं हत्वा व… । अजं मेषं ग… य था यमः ॥ … ा न् गजम् । … ॥ हंसादिवधे … ा वर्हिण मेव … य गाम् । यथ… प यस्विनीम् । … ा लं ॥ क्रव्या… ; अक्रव्यादा … ि म् ॥ धृतकुम्भं वराह तु तिलद्रोणञ्च तित्तिरिम् ।

गादिपातने । अतिवृष्टिहतानाञ्च प्रायश्चित्तन्न विद्यते ॥ इदञ्च विना वन्धं पालकसत्वे वोध्यम् ॥ प्रायश्चित्तपरीक्षणमाह हारीतः ॥ स्वशिरसा यव समादाय गोभ्यो दद्यात् यदि ताः प्रमुदिता गृह्णीयुरथैनं प्रवर्त्तयेयुः ॥ यवसं तृणम्, एनं कृतप्रायश्चित्तं, प्रवर्त्तयेयुराचरणकर्मणीतिशेषः । यदि गावस्तद्दत्तं न गृह्णीयुस्तदा पुनः प्रायश्चित्तं करणीयमिति ॥ इतिगोवधप्रायश्चित्तम् ॥

अथ गवेतरपशुपक्षिसर्पादिवधप्रायश्चित्तम् ॥ हयं हत्वा वासोदानं । हस्तिवधे पञ्चनीलवृषदानं । अजं मेषं गर्दभं प्रत्येकं हत्वा एकहायनवृषदानं । यथा यमः ॥ वासो दद्याद्धयं हत्वा पञ्च नीलवृषान् गजम् । अजम्मेषमनड्वाहं खरं हत्वैकहायनं ॥ हंसादिवधे गोदानं । यथा हत्वा हंसं वलाकाञ्च तथा वर्हिण मेव च । वानरं श्येनभासौ च प्रयच्छेद्ब्राह्मणाय गाम् । यथा क्रव्यादांश्च मृगान् हत्वा धेनुं दद्यात्पयस्विनीम् । अक्रव्यादान् वत्सतरीमुष्टं हत्वा तु कृष्णलं ॥ क्रव्यादा व्याघ्रादयः, मृगाश्च कृष्णसारादयः, अक्रव्यादा महिषादयः, कृष्णलं तत्परिमितसुवर्णम् ॥ धृतकुम्भं वराहं तु तिलद्रोणञ्च तित्तिरिम् ।

शुकं द्विहायनं वत्सं क्रौंचं हत्वैकहायनं॥ अभ्रीं कृष्णायसीन्दद्यात्सर्पं हत्वा द्विजोत्तमः । पलालभारकं षण्ढं सीसकञ्चैव माषकं॥कृष्णायसीं लौहमयीं कुद्दालिकां, खण्ढन्नपुंसकं, तच्च मृगाद्यभिप्रायं ॥ याज्ञवल्क्यः मार्जारगोधानकुलमण्डूकाञ्च पतत्रिणः । हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रम्वापादकञ्चरेत् ॥ अत्र पतत्रिणः पूर्वोक्तपक्षिव्यतिरेकेणाभिमताः ॥ कृच्छ्रपादश्चोक्तः। चतुरहः साध्यव्रतमिदं, तदशक्तौ द्वादश पणादेयाः। एतानि ज्ञानकृताभ्यासविषयाणि। सकृद्वधे तु संवर्त्तः मत्या हंसम्बलाकाञ्च श्वावित्कुक्कुरवार्हिणः । वानरं श्येनभासौ च हत्वा त्र्यहं क्षपेद्द्विजः ॥ अत्र त्र्यहोपवासेन सार्द्धकार्षापणाइति । अज्ञानकृते त्वर्द्धं । शूद्रहत्याव्रतमभिधायोक्तं अस्थिमतां सहस्रन्तु तथाऽनास्थिमतामनइति अस्थिमतां कृकलासादीनां सहस्रस्य बधे तथाऽनास्थिमतां जलौकादंशादीनां शकटवहनीयराशिवधे शूद्रहत्याव्रतं, तच्च मोहाच्छूद्रवधं प्राप्य तप्तकृच्छ्रं समाचरेत् इतिवचनाविषयम्।तप्तकृच्छ्रं मनूक्तं यथा तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान् । प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः ॥ एतद्द्वादशाह

साध्यं व्रतं । तप्तानिलपानन्तु तप्तक्षीरवाष्पपानं, अत्र पादोनधेनुचतुष्टयमितिशूलपाणिः । धेनुद्वयमितिभवदेवः। अस्थिमदल्पप्राणिवधे तु किञ्चिद्धान्यादिकन्देयं । अनस्थिमदल्पप्राणिवधे प्राणायाममात्रङ्करणीयं । तथा च मनुः किञ्चिद्देयं ब्राह्मणस्य धान्याद्यस्थिमतां वधे। अनस्थिमतां हिंसायां प्राणायामेन शुद्ध्यति ॥ अत्र ब्राह्मणक्षत्रियविशान्तुल्यं प्रायश्चित्तं, शूद्रस्त्रीवालवृद्धानामर्द्धमिति शूलपाणिः । भवदेवेन तु क्षत्रियादीनां पादपादहानिरुक्ता ॥ इति गवेतरपशुपाक्षिवधप्रायश्चित्तनिर्णयः ॥

अथ क्षत्रियादिवधप्रायश्चित्तं ॥ अज्ञानतः क्षत्रियवधे त्रैवार्षिकं महाव्रतं । तदशक्तौ पञ्चचत्वारिंशद्धेनवो देयाः । वैश्यवधेऽज्ञानतः सार्द्धवार्षिकन्तदशक्तौ सार्द्धद्वाविंशतिर्द्धेनवो देयाः। अज्ञानतः शूद्रवधे नवमासिकं तदशक्तौ सपादैकादश धेनवो देयाः। यथा मनुः तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः । वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः॥ज्ञानकृते तु सर्वत्र द्वैगुण्यं । वृत्तस्थपदं क्षत्रियादित्रितयान्वितमितिशूलपाणिः ॥ क्षत्रियं विहायेतिभवदेवः। वृत्तश्चेदं गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः। प्रवर्त्त

नं हितानाञ्च तत्सर्वं वृत्तमुच्यते॥ एतच्च प्रायश्चि
त्तं सवर्णोत्तमवर्णकृतक्षत्रियादिवधविषयम् । अध
मवर्णकृते त्वधिकं। अधमानान्तु वर्णानामुत्कृष्टहनने
गुरुः। दोषो गुरुतरो ज्ञेयः क्षत्रादीनान्न संशय इति
भविष्यपुराणादुत्तमोत्तमक्रमेणाधमानां द्वैगुण्यादि
कम्। विप्रे तु सकलं देयं पादोनं क्षत्रिये मतं वैश्येऽर्द्धं पा
दशेषन्तु शूद्रजातिषु शस्यत इतिवचनमभक्ष्यभक्षण
परमिति शूलपाणिः ॥ भवदेवस्तु अधमानान्त्विति
वचनं प्रकरणाद्ब्राह्मणविषयकं। विप्रे तु सकलं देयमि
ति ब्राह्मणवधेतरसर्ववधविषयमिति अज्ञानकृतजाति
मात्राश्रितक्षत्रियवधे नव प्राजापत्यानि । वैश्यवधे
प्राजापत्यचतुष्टयं। तादृशशूद्रवधे प्राजापत्यद्वयम् ।
ज्ञाने तु सर्वत्र द्वैगुण्यम्। यथा सम्वर्त्तः निपात्य क्षत्रिया
न्मोहात्त्रिभि। कृच्छ्रैर्विशुद्ध्यति अत्रबहुवचनात्कृच्छ्र
त्रये सिद्धे त्रिभिरितिपदोपादानं कृच्छ्रत्रयात्रिगुणप्र
तिपादनार्थं। वैश्यहत्यान्तु संप्राप्य कथंचिद्दैवमोहि
तः॥ कृच्छ्रातिकृच्छ्रं कुर्वीत स नरो वैश्यघातकः॥ मोहा
च्छूद्रवधङ्कृत्वा तप्तकृच्छ्रं समाचरेत्। कृच्छ्रातिकृच्छ्रो
यथा याज्ञवल्क्यः कृच्छ्रातिकृच्छ्रः पयसा दिवसानेक
विंशतिम्। पयोऽत्र जलं अत्र धेनुचतुष्टयम् ॥ भव

देवस्त्वज्ञानतो वृत्तस्थक्षात्रियवधे षट्वार्षिकम्। वृत्तस्थवैश्यवधे त्रैवार्षिकम्। वृत्तस्थशूद्रवधे सार्द्धवर्षम् । यथा षड्वर्षाणि राजन्ये त्रीणि वर्षाणि वैश्यके । सार्द्धसम्वत्सरं शूद्र इतिहारीतवचनात्षड्वर्षादिकमाह। ज्ञानतः सर्वत्र द्वैगुण्यम् ॥ शूलपाणिस्त्विदं सगुणादिवधविषयमाह ॥ अत्रापि स्त्रीरोगिवृद्धोनषोडशीयवालानामर्द्धम् । पञ्चवर्षादूर्ध्वमेकादशवर्षपर्यन्तं पादमात्रं द्रष्टव्यम् । सङ्कल्पवाक्यं पत्रदानञ्च गोवधप्रकरणीयरीत्या समूह्य देयमिति । प्रयोजकादीनां पादपादहानिरूह्या । अन्यान्यधिकप्रायश्चित्तवोधकवचनानि यज्ञस्थाभिषिक्तब्राह्मणादिपूजकसगुणक्षत्रियादिवधभेदेन व्याख्येयानि । कलौ तु तदभावान्न लिखितानि ॥ इति क्षत्रियादिवधप्रायश्चित्तनिर्णयः ॥

अथ प्रतिलोमजजातिवधप्रायश्चित्तम् ॥ तत्र याज्ञवल्क्यः । चान्द्रायणञ्चरेत्सर्वानप्रकृष्टान्निहत्य तु । शूद्रोधिकारहीनोपि मासेनानेन शुद्ध्यति । प्रतिलोमजा मागधायोगवादयः । रजकादिवधेपि ज्ञानकृते चान्द्रायणम् । अज्ञानकृते पराकः । तथा चाङ्गिराः सर्वान्त्यजानां गमने भोजने संप्रमापणे ।

पराकेन च शुद्धिः स्यादित्याङ्गिरसभाषितम् ॥ अन्त्यजागमने रेतःसेकात्पूर्वं सकृज्ज्ञानकृते। एवं भोजने। इति प्रतिलोमजादिवधप्रायश्चित्तम् ॥

अथ स्त्रीवधप्रायश्चित्तम् ॥ तत्र निर्गुणब्राह्मणादि स्त्रीवधव्यवस्था। कामतो ब्राह्मणीवधे षड्वार्षिकम्। क्षत्रियावधे त्रैवार्षिकम्। वैश्यावधे सार्द्धवार्षिकम्। शूद्रावधे नवमासिकम्। अज्ञानतोऽर्द्धमिति। यथा हारीतः। क्षत्रियवद्ब्राह्मणीषु वैश्यवत्क्षत्रियासु शूद्रवद्वैश्यासु शूद्रासु शूद्रार्द्धमिति। तथाच भविष्यपुराणोक्तं। राजन्यवद्ब्राह्मणीन्तु राजन्याञ्चैव वैश्यवत्। वैश्याञ्च शूद्रवच्छूद्रां शूद्रार्द्धेन विधानवदिति ॥

अत्रायं संक्षेपः ॥ ज्ञानतः ब्राह्मणीवधे नवतिधेनवः। क्षत्रियावधे पञ्चचत्वारिंशद्धेनवः। वैश्यावधे सार्द्धद्वाविंशतिधेनवः। शूद्रावधे सपादैकादशधेनवः। अज्ञानतस्तदर्द्धम्। अज्ञानतो यद्वर्णवधे यत्प्रायश्चित्तं ज्ञानतस्तद्वर्णगर्भवधे तद्वर्णात्रेयीवधे च तत्प्रायश्चित्तम्। तेन ज्ञानतो ब्राह्मणीगर्भवधे षड्वार्षिकम्। क्षत्रियागर्भवधे त्रैवार्षिकम्। वैश्यागर्भवधे सार्द्धवार्षिकं। शूद्रागर्भवधे नवमासिकम् ॥

यथा याज्ञवल्क्यः गर्भहा च यथावर्णन्तथात्रेयीनिषूदन इति । आत्रेयी रजोयोगात्प्रभृतिषोडशदिनपर्यन्तं । यथा वशिष्ठः रजस्वलामृतुस्नातां चात्रेयीमाहुः त्रयोदशाहानीति । रजस्वला यथात्रेयी तथा ऋतुस्नातापि त्रयोदशाहानीत्यर्थः ॥

सकृत्सवर्णव्यभिचारितस्त्रीवधप्रायश्चित्तमाह याज्ञवल्क्यः अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतञ्चरेत् ॥ अप्रदुष्टां प्रकर्षेणादुष्टामीषद्दुष्टां, सकृत्सवर्णव्यभिचरितामित्यर्थः । अदुष्टस्त्रीवधप्रायश्चित्तस्योक्तत्वादिति । तत्र सकृत्सवर्णव्यभिचारितब्राह्मण्यादीनामकामतो वधे ब्राह्मणादिवर्णजातशूद्रवधप्रायश्चित्तङ्कार्यम् । यथा ब्राह्मणजातशूद्रवधे गौतमः संवत्सरं व्रतं कृत्वा वृषभैकादशागाश्च दक्षिणां दद्यात् इति । क्षत्रियजातशूद्रवधे शङ्खः शूद्रवधे कृच्छ्रार्द्धं गोप्रदानञ्च । वैश्यजातशूद्रवधे काश्यपः शूद्रे सान्तपनं तिलधेनुश्चेति । तथा शूद्रावधे अकामतो हीनशूद्रवधोक्तं तप्तकृच्छ्रम् ॥

तथा चात्र संक्षेपः ॥ अकामतः सकृत्सवर्णव्यभिचारितब्राह्मणीवधे पञ्चदश धेनवः । वृषभैकादशागावश्च दक्षिणा । क्षत्रियावधे सार्द्धसप्त धेनवः

गोर्दक्षिणा । वैश्यावधे चतस्रो धेनवः यथाशक्ति द क्षिणा। तथा शूद्रावधे धेनुद्वयं यथाशक्ति दक्षिणा। ज्ञानतो द्वैगुण्यम्। तप्तकृच्छ्रं पूर्वमुक्तम्। यत्तु याज्ञव ल्क्यवचनम् दुर्वृत्ता ब्रह्मक्षत्रविट्शूद्रयोषाः प्रमाप्य तु। भृतिं धनुर्वस्तमविं क्रमाद्दद्याद्विशुद्धयइति, तत् प्रातिलोम्येनात्यन्ताभ्यासव्यभिचारितस्त्रीवधविषय म्। भृतिः चर्म्मनिर्म्मितं जीनइतिख्यातं, वस्तः छा गः, अविर्मेषः। इदमज्ञानतः। ज्ञानतो द्वैगुण्यम्॥

अथ चाण्डालाद्यन्नभक्षणप्रायश्चित्तम्॥ तत्र स कृदभ्यासात्यन्ताभ्यासभेदेन व्यवस्था मुनिभिरुक्ता इति ता निरूप्यन्ते। यद्यपि द्रवद्रव्यस्य कण्ठादधोन यनमात्रं पानं, तच्चैकस्मिन्प्रयोगे ऽप्यनेकधा भवति, तथाप्येकमेव पानम्। यथा एकफलोद्देशेन प्रवृत्तकृति व्याप्यानाञ्चैकोपक्रमाणाम्व्यापारनिचयानामप्यै क्यमेव धात्वर्थत्वात् तथात्राप्येकफलोद्देशेन एकप्रय त्नोपक्रमाणां ग्रासानामेकस्मिन् प्रयोगे भोजनं सकृ द्भोजनम्। एवं पुनर्भोजनेऽभ्यासः। वारत्रयेऽत्यन्ता भ्यासः इतिप्रयोगभेदादशनभेदंव्यक्तमाह कात्या यनः मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिना म्। अहनि च तमस्विन्यां सार्द्धप्रहरयामतइति। त

त्र ज्ञानतः सकृच्चाण्डालाद्यन्नभक्षणे चान्द्रायणम् । अज्ञानतस्तप्तकृच्छ्रम् । यथाहाङ्गिराः। अन्त्यावसायिनामन्नमश्नीयाद्यस्तु कामतः । स तु चान्द्रायणङ्कुर्यात्तप्तकृच्छ्रमथापि वा ॥ अन्त्यावसायिनमाह चाण्डालःश्वपचः क्षत्ता सूतो वैदेहकस्तथा । मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥ ब्राह्मण्यां शूद्राज्जातः चाण्डालः । क्षत्तुरुग्र्यां जातः श्वपचः । क्षत्रियायां शूद्राज्जातः क्षत्ता । ब्राह्मण्यां क्षत्रियाज्जातस्सूतः । ब्राह्मण्याम्वैश्याज्जातो वैदेहकः । क्षत्रियायां वैश्यान्मागधः । वैश्यायां शूद्राज्जातोऽयोगवः । चान्द्रायणेऽष्टौ धेनवः । तप्तकृच्छ्रे पादोनधेनुचतुष्टयम् । भवदेवस्तु चान्द्रायणमत्र शिशुचान्द्रायणम् । अत्र धेनुचतुष्टयम् तप्तकृच्छ्रे धेनुद्वयम् मिलित्वा षड्धेनवः। अकामतइदं । ज्ञानतो द्वैगुण्यमिह । वलात् सकृच्चाण्डालानामन्नभक्षणे त्रिरात्रं । सिद्धान्नभक्षणे पराकव्रतं । विष्णुः चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् । सिद्धान्नं भुक्त्वा पराकव्रतङ्कुर्यादितितद्वलाद्भोजनविषयमिति । अत्र यद्यपि वलात्प्रवर्त्तमानस्य विषयज्ञानमस्त्येव तथापि स्वारसिकत्वाभावात् न तथात्वम्। किन्त्वज्ञानकृतपा

पाद्युक्तम् । तत्र पापाधिक्यमिति विशेषः । पराक
माह मनुः यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।
पराको नाम कृच्छ्रोयं सर्वपापापनोदनः ॥ पराके पंच
धेनवः । धेनुद्वयमिति भवदेवः । अत्रामान्ने सिद्धा
न्नतुरीयभागप्रायश्चित्तविधानादेकत्र निर्णीतःशा
स्त्रार्थइतिन्यायात् सर्वत्र सिद्धान्नतुरीयभागप्रायश्चि
त्तमामान्नभक्षणे वोध्यमिति । आपस्तम्वेनायमर्थः
स्वीकृतो यथा पादमामान्नभक्षणइति । एतत्पातक
स्योपपातकत्वेन तन्त्रताया अभावात् ज्ञानाभ्यासे
चान्द्रायणाभ्यासः । अज्ञानाभ्यासे तप्तकृच्छ्राभ्या
सः । तेन ज्ञानतश्चतुर्विंशतिवारभोजने पातित्यम् ।
अज्ञानतोऽष्टचत्वारिंशद्वारभोजने पातित्यं । यथा म
नुः चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य
च । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यन्तु गच्छति ॥
अन्त्ये भवाअन्त्याः, यतोऽधमजातयो न सन्तीति दी
पकलिका । अज्ञानादसकृदभिगमने तु पातित्यं,
तन्तु वक्ष्यामः । चाण्डालयवनयोरन्नभक्षणे तुल्यं
प्रायश्चित्तम् । देवलेन चाण्डालयवनयोर्वलान्मासदा
सत्वापन्नद्विजस्य प्राजापत्यविधानात् सर्वत्र तुल्यं प्रा
यश्चित्तम्वोध्यं । यथा दासीकृतो वलान्म्लेच्छैश्चा

ण्डालाद्यैश्च दस्युभिः । मासोषिते द्विजातौ तु प्राजापत्यम्विशोधनम् ॥ म्लेच्छश्च गोमांसखादको यस्तु विरुद्धं वहु भाषते । सर्वाचारविहीनस्तु म्लेच्छ इत्यभिधीयतइति वौधायनोक्तः॥ तत्र यवनदेशोद्भवा यवनाइति। अज्ञानादिति ज्ञाने तु तत्तुल्यतया द्विगुणव्रताचरणेपि न व्यवहार्यः । कामतोऽव्यवहार्यस्तु वचनादिह जायत इतियाज्ञवल्क्यात् । पापाभावे कथमव्यवहार्यत्वमित्यतआह वचनादिति । तथा हि पापस्य द्वे शक्ती नरकोत्पादिका व्यवहारविरोधिका च तत्र प्रायश्चित्तेन नरकोत्पादिकायाः शक्तेर्विरहेपि व्यवहारविरोधिका शक्तिरस्त्येवेति भावः। एषां प्रतिग्रहे भोजनतुल्यं प्रायश्चित्तम् । चाण्डालस्पृष्टान्नभोजने प्राजापत्यं चाण्डालस्पृष्टमन्नन्तु योऽश्नीयाद्ब्राह्मणः क्वचित् । तस्य शुद्धिं प्रवक्ष्यामि प्राजापत्येन नित्यशः ॥ एतदज्ञानतः । ज्ञानतोद्वैगुण्यामिति । अज्ञातः सकृच्चाण्डालाद्युच्छिष्टान्नभोजने चान्द्रायणं यथा आपस्तम्वः अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातयः । चान्द्रं कृच्छ्रं तदर्द्धञ्च ब्रह्मक्षत्रविशाम्विधिः ॥ अत्र क्षत्रविशोः कृच्छ्रतदर्द्धविधानन्तदापदि वलात्काराद

न्नेतरताम्बूलादुच्चिछष्टपरम् ॥ अत्राज्ञाने आपस्त म्वेन उच्छिष्टे चान्द्रायणविधानात् अङ्गिरसा चा नुच्छिष्टे तप्तकृच्छ्रविधानात् सर्वात्रानुच्छिष्टादु च्छिष्टे द्वैगुण्यमितिशूलपाणिः । शुष्कान्ने पादः । पक्वान्ने त्वर्द्धं प्रायश्चित्तं । यथा यस्तस्य भुङ्क्ते प क्वान्नं कृच्छ्रार्द्धन्तस्य निर्द्दिशेत् । शुष्कान्नभोजिनः पादमित्याह भगवान्मनुः ॥ इतिविष्णुधर्म्मोत्तरी यात् । तस्य द्वितीयसंसर्गिणः । शुष्कान्नं आमान्नं, पक्वान्नं शक्तुलाजादि, चाण्डालस्पृष्टोदकपाने सा न्तपनव्रतं यस्तु चाण्डालसंस्पृष्टम्पिवेत्तोयमका मतः । सतु सान्तपनं कृच्छ्रं चरेच्छुद्धयर्थमात्मन इत्यङ्गिरोवचनात् । हारीतः चाण्डालस्य तु पानी यं ब्राह्मणस्तु यदा पिबेत् । षड्रात्रोपोषितो भूत्वा प ञ्चगव्येन शुद्धयति ॥ अनुत्तारिते तु सान्तपनमधि कम् । सान्तपनमाह याज्ञवल्क्यः कुशोदकञ्च गोक्षी रं दधिमूत्रं सकृद्घृतं । प्राश्यापरेद्युरुपवसेत्कृच्छ्रं सा न्तपनं चरन् ॥ एतद्द्व्यहसाध्यं, तदशक्तौ पुराणमे कं देयम् । ज्ञानतो द्वैगुण्यमिति । तोयपदमुपलक्षणं क्षीरादेरपि, यस्तु चाण्डालसंस्पृष्टं पिबेत्किञ्चिदका मतः । सतु सान्तपनं कृच्छ्रं चरेच्छुद्ध्यर्थमात्मन

इत्यङ्गिरोवचनात् । किञ्चित् जलक्षीरादिकमिति शूलपाणिः । आपस्तम्बः चाण्डालकूपभाण्डेषु यस्त्व ज्ञानाज्जलं पिबेत् । प्रायश्चित्तङ्कथन्तस्य वर्णे वर्णे विनिर्द्दिशेत् ॥ चरेत्सान्तपनम्विप्रः प्राजापत्य न्तु भूमिपः । तदर्द्धन्तु चरेद्वैश्यः पादं शूद्रस्य निर्द्दिशे त् ॥ अभ्यासतइदं । अनभ्यासे तु देवलः यस्तु चा ण्डालभाण्डस्थमज्ञानादुदकं पिबेत् । सतु त्र्यहेण शुद्ध्येत शूद्रस्त्वेकेन शुद्ध्यति ॥ अज्ञानतइदं । ज्ञानतो द्वैगुण्यम् ॥ अत्र सान्तपनं सप्ताहसाध्यं ब्रह्मपुराणे यथा प्रथमेऽहनि नाश्नीयाद्गोमूत्रा शी ततः पुनः ॥ तृतीये गोमयाशी च चतुर्थे क्षीर पो भवेत् ॥ पञ्चमे दधिभुक्चैव घृतं षष्ठे पिबेदथ । कुशोदकं सप्तमे तु कृच्छ्रः सान्तपने विधिः । एत दशक्तौ धेनुद्वयम् ॥ ज्ञानतश्चाण्डालस्पृष्टोदकपाने त्रिरात्रोपवासपूर्वकं पञ्चगव्यपानमाह आपस्तम्बः चाण्डालेन तु संस्पृष्टा अपो यः पिबति द्विजः।त्रिरात्रो पोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥ पञ्चगव्यंय्य था गोशकृद्द्विगुणम्मूत्रं दुग्धं दद्याच्चतुर्गुणम् । घृ तञ्चाष्टगुणं प्रोक्तं पञ्चगव्ये तथा दधि ॥ इत्याप स्तम्बीयात् । तथा अष्टगुणमित्यर्थः । अन्यखानि

तचाण्डालपरिगृहीतकूपादिजलपाने अभ्यासतोऽज्ञानतः प्राजापत्यम्। चाण्डालपरिगृहीतन्तु योऽज्ञानादुदकं पिवेत् । तस्य शुद्धिं विजानीयात्प्राजापत्येन नित्यश इति॥ आपदि त्वापस्तवः श्वपाकचाण्डालपारिग्रहेषु पीत्वा जलं शुद्धयति पञ्चगव्यैः । पञ्चगव्यपानं पूर्वेद्युरुपोष्येत्यर्थः ॥

तदयं संक्षेपः॥ अज्ञानाच्चाण्डालाद्यन्नभक्षणे पादोनधेनुचतुष्टयं । ज्ञानतोभोजने सार्द्धसप्तधेनवः । वलात्कारभोजने पञ्च धेनवः । पक्वान्ने सर्वत्रार्द्धम् । आमान्ने तुरीयांशः । अज्ञानतश्चाण्डालस्पृष्टान्नभोजने धेनुरेका । ज्ञानतो द्वे धेनू ज्ञानतः सर्वत्रोच्छिष्टान्ने द्वैगुण्यम् । अज्ञानतश्चाण्डालस्पृष्टजलक्षीरादिपाने पुराणैकलभ्यं काञ्चनं । ज्ञानतः पुराणद्वयलभ्यं काञ्चनं । चाण्डालकूपभाण्डस्थजलपानेऽज्ञानतः सार्द्धकार्षापणलभ्यं काञ्चनं । ज्ञानतो धेनुरेका इति । सर्वत्राभ्यासे प्रायश्चित्तावृत्तिरेतद्ब्राह्मणस्य, विप्रे तु सकलन्देयं पादोनं क्षत्रिये मतम्। वैश्येऽर्द्धम्पादशेषन्तु शूद्रजातिषु शस्यतइतिवृहद्विष्णुवचनात् क्षत्रियादीनां पादपादहानिः । स्त्रीवालवृद्धरोगिणामर्द्धं प्रायश्चित्तं।धेनोरभावे तन्मूल्यन्देयम्॥

उत्सर्गवाक्यंय्यथा ॐ अद्येत्यादिसकृज्ज्ञानकृतचा ण्डालसिद्धान्नभक्षणजनितपापक्षयकामो ऽङ्गिरउ क्तचान्द्रायणव्रतानुकल्पपयस्विनीसार्द्धसप्तधेनुमूल्यं सार्द्धद्वाविंशतिपुराणलभ्यकाञ्चनमग्निदैवतं ब्राह्म णयाहं ददे । एवं सर्वत्रोहेन कार्यम् । यथाशक्ति द क्षिणेति । विद्वद्विप्रनृपस्त्रीव्यतिरिक्तानां पत्रदाने त्विदं लेख्यम् । पूर्वदिने सशिखवपनं कारयित्वा घृ तं प्राश्योपोष्य परदिने सार्द्धसप्तधेनुमूल्यमुत्सृज्य ब्राह्मणाय दत्वा यथाशक्ति दक्षिणान्दद्यात् । ततः पार्वणविधिना श्राद्धं कुर्य्यात् अमुकस्यमतमेतदि त्यादि ॥

अथ भुक्तोच्छिष्टस्य चाण्डालादिस्पर्शप्रायश्चि त्तम् ॥ आपस्तम्वः भुक्तोच्छिष्टस्त्वनाचान्तश्चा ण्डालश्वपचेन वा । प्रमादात्स्पर्शनं गच्छेत्तत्र कुर्या द्विशोधनं ॥ गायत्र्यष्टसहस्रं तु द्रुपदाम्वा शतं ज पेत् । अष्टसहस्रमष्टाधिकसहस्रं, त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुद्ध्यति । मिलित्वा पादोनं प्रा जापत्यं प्रायश्चित्तम् ॥

अथ चाण्डालादिच्छिन्नयज्ञोपवीते धेनुचतुष्टय म् । ऋष्यश्रृंगः चाण्डालैः श्वपचैर्वापि छिन्नं यज्ञोप

वीतकम् । मुनिभिस्तु विनिर्द्दिष्टं महासान्तपनद्वयम् ॥

अथ चाण्डालीगमने प्रायश्चित्तम् ॥ अज्ञानतः सकृतच्चाण्डालीगमने द्वादशवार्षिकव्रतम् ॥ ज्ञानतस्तु मरणम् । यथा नारदः । चाण्डालीम्ब्राह्मणो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यन्तु गच्छति ॥ पतति द्वादशवार्षिकव्रतभाग्भवतीत्यर्थः। ज्ञानात्साम्योपन्यासस्तु मरणान्तिकपर इत्यर्थः। यथा यमः। रेतः सिक्त्वा कुमारीषु चाण्डालीषु सुतासु च । सपिण्डापत्यदारेषु प्राणत्यागो विधीयते ॥ अत्र प्राणत्यागे चतुर्विंशतिवार्षिकव्रतविधानात् । भोजने त्वज्ञानतोऽष्टचत्वारिंशद्वारेण ज्ञानतश्चतुर्विंशतिवारेण पातित्यं । द्वादशवार्षिकव्रताकरणेऽशीत्युत्तरशतं धेनवो देयाइति। साम्यन्तु गच्छतीत्यनेन द्विगुणद्वादशवार्षिकप्रायश्चित्तनिषेधो न तु मरणान्तिकप्रायश्चित्तनिषेधः । अत्रापि क्षत्रियादीनां पादपादहानिः। वालवृद्धरोगिणामर्द्धम् । ज्ञाने तु सर्वेषाम्मरणमिति । स्त्रियाआपि पुरुषतुल्यप्रायश्चित्तमाहाङ्गिराः व्रतन्तु चोदितं पुसां पतितस्त्रीनिषेवणात् ।

तच्चापि कारयेन्मूढां पतितासेवनात् स्त्रियम् ॥ अ
त्र तच्चेत्युपादानात्स्त्रीत्वेपि न तद्धानिः । एतेषां प्र
तिग्रहे भोजनतुल्यं प्रायाश्चित्तम् । चाण्डालजातिम
विज्ञाय एकत्र वासे प्रायश्चित्तमाह आपस्तम्बः
अन्त्यजातिमविज्ञाय निवसेद्यस्तु वेश्मनि । सवै ज्ञा
त्वा तु कालेन कुर्यात्तत्र विशोधनम् ॥ चान्द्रायणं
पराको वा द्विजातीनां विशोधनम् । प्राजापत्यन्तु
शूद्राणान्तथा संसर्गदूषिते ॥ इति चाण्डालान्नभक्ष
णाभिगमनादिप्रायश्चित्तम् ॥

अथ शौण्डिकाद्यन्नभक्षणप्रायश्चित्तम् ॥ अज्ञा
नतः सकृच्छौण्डिकान्नभोजने धेनुद्वयम् । यथा श
ङ्खः शौण्डिकान्नं सूतिकान्नं भुक्त्वा मासव्रती भ
वेत् । मासव्रती गोमूत्रयावकेन, तदशक्तौ धेनुद्वय
म् । आमान्नभोजने तु सार्द्धैककार्षापणलभ्यं का
ञ्चनम् । यथा मनुः श्ववतां शौण्डिकानां च चैलनि
र्णेजकस्य च । रञ्जकस्य नृशंसस्य यस्य चोपपतिर्गृ
हे ॥ भुक्त्वा चान्यतमस्यान्नममत्या क्षपणं त्र्यहं । म
त्या भुक्त्वा चरेत्कृच्छ्रं तथा विण्मूत्रभक्षणे ॥ अतः
पादमामान्नाशने तथेत्यापस्तम्बीयेन सहैकवाक्यत्वं
संगच्छते । रञ्जको वस्त्ररञ्जनकर्त्ता, नृशंसो घातुकः ।

अत्र मनुना शौण्डिकस्यान्त्यजानां तुल्यप्रायश्चित्ता भिधानात् आमान्ने सर्वेषां तुल्यं प्रायश्चित्तं । बहूनामेकधर्माणामेकस्यापि यदुच्यते । सर्वेषामेव तत्कुर्यादेकरूपा हि ते स्मृताः ॥ तथाच शौण्डिकपदं कापालिकान्त्यजोपलक्षणम् । अन्त्यजानाह मनुः रजकश्चर्मकारश्च नटो वरुड एव च । कैवर्त्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥ तेनैषामज्ञानतः सकृदन्नभक्षणे धेनुद्वयम् । आमान्ने सार्द्धकार्षापणम् । ज्ञानतो द्वैगुण्यं । अभ्यासे तु प्रायश्चित्तावृत्तिरिति । यत्पुनर्यमेनैतानभिधाय एतेषां तु स्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयमित्यभिहितं तत् ज्ञानाज्ञानाभ्यामष्टधा भोजनविषयम्, कृच्छ्राब्दे त्रिंशद्धेनवः। चान्द्रायणद्वये पञ्चदश धेनवः। अज्ञानान्नवतिवारभोजने पातित्यं। ज्ञानात्पंचचत्वारिंशद्वारभोजने। अत्राशीत्युत्तरशतं धेनवो देयाः । अन्त्यजानां ज्ञानतः सकृदुच्छिष्टान्नभोजने शातातपः अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातिभिः । चान्द्रं कृच्छ्रं तदर्द्धञ्च क्रमात्तेषां विशोधनम्॥ कृच्छ्रं तप्तकृच्छ्रं, तदर्द्धन्तप्तकृच्छ्रार्द्धं, शुष्कान्नभोजने सिद्धान्नार्द्धं, स्पृ

ष्टान्नभोजने च पादइति। शौंडिककापालिकान्त्यज संबन्धिजलपाने त्वापस्तम्बः अज्ञानात्तु पिबेत्तोयं ब्राह्मणोऽन्त्यस्थजातितः। त्रिरात्रोपोषितो भूत्वा पंचगव्येन शुद्ध्यति॥ इत्यज्ञानतः सकृत्पानविषयमेव। ज्ञानतो द्वैगुण्यम्। अभ्यासे प्रायश्चित्तावृत्तिरिति। एषामज्ञानतः सकृद्भांडस्थोदकपाने तु पराशरः भांडस्थितमभोज्यानामपो दधि पयः पिबेत्। ब्राह्मणःक्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः॥ ब्रह्मकूर्च्चोपवासेन द्विजातीनान्तु निष्कृतिः। शूद्रस्य तूपवासेन दद्याद्दानंच शक्तितः॥ चतुर्दश्यामुपोषणं कृत्वाऽपरादिने पंचगव्यमात्रप्राशनमिति ब्रह्मकुर्च्चोपवासो द्व्यह साध्यः। तदशक्तौ पुराणलभ्यकांचनदानं। अन्त्यजखानितकूपादौ सकृत्स्नानाचरणे पंचगव्यपानम्। अन्त्यजैः खानिताःकूपास्तडागानि तथैव च। एषु स्नात्वा च पीत्वा च पंचगव्येन शुद्ध्यति॥ पंचगव्यपानमुपवासपूर्वकं, व्रतरूपत्वात्। इदमज्ञाने। ज्ञानतो द्वैगुण्यमिति। अन्त्यजस्त्रीसकृद्गमनेऽज्ञानतश्चान्द्रायणं। ज्ञानतो द्वैगुण्यं यथा संवर्त्तः नटीं शैलूषिकीं चैव रजकीं वेणुजीविनीम्। गत्वा चान्द्रायणं कुर्यात्तथा चर्म्मोपजीवनीम्॥ कामतस्तु यदा गच्छेच्च

रेच्चान्द्रायणद्वयम् । नट्याद्युपलक्षणम् शौंडिकादि स्त्रीणामपि, पूर्वोक्तवहूनामितिवचनात् । अत्राज्ञानाच्चतुर्विंशतिवाराभिगमने पातित्यं । ज्ञानात्तु द्वादशवाराभिगमने पातित्यमिति । यत्तु कापालिकान्नभोक्तृणान्तन्नारीगामिनान्तथा।ज्ञानात्कृच्छ्राब्दमुद्दिष्ट मज्ञानादैन्दवद्वयमित्यापस्तम्ववचनं तदभिगमने ज्ञानाज्ञानाभ्यामभ्यासविषयमष्टधाभोजनविषयं च । कृच्छ्राब्दे त्रिंशद्धेनवः।चान्द्रायणद्वये पंचदश धेनवः। भुक्तोच्छिष्टेनान्त्यजस्पर्शे प्राजापत्यं कर्त्तव्यम्। अर्द्धोच्छिष्टामान्नाशनाभ्यां च पादः कार्य्यः। यथापस्तम्वः भुक्त्वोच्छिष्टोऽन्त्यजैः स्पृष्टः प्राजापत्यं समादिशेत् । अर्द्धोच्छिष्टे स्मृतः पादः पादमामाशने तथा॥ इति प्राजापत्यं ज्ञाने। अज्ञानतोऽर्द्धं । अर्द्धोच्छिष्टो येनाद्यग्रासआस्ये निःक्षिप्तो नावगीर्णः। पानादौ शवादिस्पर्शे प्रायश्चित्तमाह दक्षः पाने मैथुनसंसर्गे तथामूत्रपुरीषयोः । संस्पर्शं यदि गच्छेत्तु शवोदक्यात्न्यजैः सह ॥ दिनमेकं चरेन्मूत्रे पुरीषे च दिनद्वयम् । दिनत्रयं मैथुने स्यात्पाने स्याच्च चतुष्टयम् ॥

अत्रायं संक्षेपः । शौंडिककापालिकान्त्यजातीनां

सकृदज्ञानतोऽन्नभोजने धेनुद्वयम् । शुष्कान्नाशने धेनुरेका । आमान्ने धेन्वर्द्धम् । उच्छिष्टान्नाशने पादोनधेनुचतुष्टयम्। स्पृष्टान्नाशने सर्वत्र पादः । पीतशेषजलपाने कार्षापणद्वयम् । अभोज्यभाण्डस्थजलपाने तु कार्षापणमेकम् । अन्त्यजखानितजलपाने स्पृष्टजलपाने च कार्षापणार्द्धम् । ज्ञाने सर्वत्र द्वैगुण्यम् । अभिगमने सार्द्धसप्तधेनवोऽज्ञानतः । ज्ञानतः पञ्चदशधेनवोऽभिगमने । ज्ञानतः सकृद्भुक्तोच्छिष्टस्पर्शे धेनुरेका । अज्ञाने धेन्वर्द्धम् । अर्द्धोच्छिष्टस्यान्त्यजस्पर्शे आमान्नाशने च तदर्द्धम् । मूत्रोच्छिष्टेऽष्टौपणाः । पुरीषोच्छिष्टे कार्षापणमेकम् । मैथुनोच्छिष्टे तु सार्द्धकार्षापणम् । पानोच्छिष्टे कार्षापणद्वयम् । ज्ञानतः सर्वत्र द्वैगुण्यम् । अभ्यासादावृत्तिः ॥ सर्वत्र क्षत्रियादीनां पादपादहानिः । सर्वत्र स्त्रीबालवृद्धरोगिणामर्द्धम् ॥ इति शौंडिकाद्यन्नभोजनादिप्रायश्चित्तनिर्णयः ॥

अथ शूद्रोच्छिष्टभोजनप्रायश्चित्तम् ॥ अज्ञानात्सकृच्छूद्रोच्छिष्टभोजने त्रिरात्राभोजनं । यथापस्तम्वः अज्ञानाद्यस्तु भुंजीत शूद्रोच्छिष्टं द्विजोत्तमः । त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥ ज्ञाने तु द्वैगु

ण्यमिति । त्रिरात्रोपवासेन सार्द्धकार्षापणलभ्यकां चनदानम् । ब्रह्मपुराणे उच्छिष्टेन तु शूद्रेण विप्रः स्पृष्टस्तु तादृशः । उपवासेन शुद्धिः स्याच्छुना सं स्पृष्ट एव वा॥ अनुच्छिष्टशूद्रस्पर्शे उच्छिष्टब्राह्मणस्य नक्तमितिप्रायश्चित्तविवेकः । उपवीतं ब्राह्मणस्य छिन्नं शूद्रेण कामतः । अन्यदादाय मन्त्रेण जप न्नुपवसेद्दिनं ॥ मन्त्रानादेशे गायत्रीमिति वचना दनिर्दिष्टे शतमिति वचनाच्छतावृत्तिगायत्रीजपं कृ त्वोपवसेदित्यर्थः । शूद्रस्य प्रायश्चित्तमाह वृहस्पतिः शूद्रेण तु यदा छिन्नमुपवीतं द्विजन्मनः । दण्डं त्रिंशत्पणं दत्वा प्राजापत्येन शुद्ध्यति ॥ तत्रैतत्कृते प्राजापत्यं धेनुदानसमं तन्मूल्यं कार्षापणत्रयम् ऋ ष्यशृंगः चाण्डालैः श्वपचैर्वापि छिन्नं यज्ञोपवीत कम्।मुनिभिस्तु विनिर्दिष्टम्महासांत्तपनद्वयम्॥ सा न्तापनव्रतं सप्ताहसाध्यं धेनुद्वयमिति तु विवेकः । शङ्खः ब्राह्मणेन गुणहीनशूद्रासकृद्गमने सार्द्ध मासिकम्व्रतमिदं करणीयम् । यथा प्रचेताः आनु लोम्येन विहितं कृच्छ्रं पादावरोपितम् इतिस्त्रियाः स्वसजातीयगमने यदुक्तं तदेवात्र अस्याधमायाग मने पादपादहीनं कार्य्यमितिवचनार्थः। तेन ब्राह्मण

स्य क्षत्रियागमने द्विवार्षिकपादहीनं सार्द्धवार्षिकव्रतं । वैश्यागमने वार्षिकपादद्वयहीनं षाण्मासिकव्रतं । विशिष्टशूद्रागमनेप्येवम् । अधमशूद्रागमने षाण्मासिकं पादत्रयहीनं सार्द्धमासिकव्रतमिति । शङ्खः स्नानमाचमनं दानं देवतापितृतर्प्पणम् । शूद्रोदकैर्न्न कुर्वीत तथा मेघादिनिस्सृतैः ॥ अत्रैतत्कृते दिनमेकमभोजनं वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे । स्नातकव्रतलोपे च दिनमेकमभोजनमितिमनुवचनात् । इति शूद्रोच्छिष्टादिप्रायश्चित्तनिर्णयः ॥

अथ ब्राह्मणोच्छिष्टस्पर्शादिप्रायश्चित्तम् ॥ ब्रह्मपुराणे उच्छिष्टेन तु विप्रेण विप्रः स्पृष्टस्तु तादृशः। उभौ स्नानं प्रकुरुतः सद्य एव समाहितौ ॥ हारीतः विना यज्ञोपवीतेन भुङ्क्ते च ब्राह्मणो यदि । स्नानं कृत्वा जपं कृत्वा उपवासेन शुद्धयति ॥ ब्राह्मणेन यदा दैवाच्छिन्नं यज्ञोपवीतकम् । मनस्तापेन शुद्धिः स्यादापस्तम्बो ब्रवीन्मुनिः ॥ प्राणायामत्रयं कृत्वा निराहारः क्षपेद्दिनं । अज्ञाने मनस्तापः । ज्ञानेतूपवासः, छिन्नोपवीतस्यान्नदानपूर्वकमुपवासः । वर्षाणीत्यनुबृतौ पुरुषान्तराव्यभिचारितां सव

र्णां गत्वाइत्यनुवृत्तौयमः द्वे परभार्य्यासु त्रीणि श्रोत्रियपत्नीषु एतत्कामतः । अभ्यासे त्वापस्तम्वः सवर्णायामनन्यपूर्वायां सकृन्निपाते पादः । अभ्यासे द्विपादः । अत्यन्ताभ्यासे त्रिपादः चतुर्थे सर्वं मिति । सर्वमष्टवर्षादिकं द्वादशवार्षिकं वेत्यर्थः । अज्ञानतोऽर्द्धमिति । अत्यन्तनिर्गुणव्राह्मणपत्न्यभिगामिनो व्राह्मणस्य वार्षिकप्रायश्चित्तमाह वौधायनः पुंसां व्राह्मणादीनां सम्वत्सरं ब्रह्मचर्य्यंशूद्रं कटाग्निना दहेदिति । स्वभर्तृव्यतिरिक्तसवर्णैकपुरुषगामिन्यामभिगन्तुः सवर्णस्य पूर्वोक्तप्रायश्चित्तपादहानिः । एवं पुरुषद्वयादिगामिन्यां द्विपादादिहानिः । तेन पुरुषचतुष्टयगामिन्यां स्वैरिण्यां व्राह्मण्यां शङ्खेनान्यत्प्रायश्चित्तमुक्तं, नत्वैकवार्षिकमुक्तमिति । यथा शङ्खः व्राह्मण्यां स्वैरिण्यामवकीर्णायां त्र्यहमुपोष्य घृतपात्रं दद्यादिति । अत्रैकपुरुषव्यभिचरितसवर्णस्त्र्यादिगमने पादपादह्रासइत्यर्थः पूर्वोक्तापस्तम्ववचनादिति भवदेवः ॥ इति व्राह्मणोच्छिष्टस्पर्शादिप्रकरणनिर्णयः ॥

अथ शूद्रादीनां प्रतिलोमस्त्रीगमनप्रायश्चित्तम् ॥ तत्र वशिष्ठः शूद्रश्चेद्व्राह्मणीमभिगच्छेत्तदा वीरणदलै

वेंष्टियित्वा शूद्रमग्नौ प्रास्यत् ब्राह्मण्यास्तु शिरोवपनं कारयित्वा सर्पिषाभ्यंग्य नग्नां खरमारोप्य महापथाभिगमनं कारयेत् पूता भवतीतिविज्ञायते।वैश्यश्चेद्ब्राह्मणीमभिगच्छेत्तदा लोहितदर्भैर्वेष्टायित्वा वैश्यमग्नौ प्रास्यत् ब्राह्मण्याःपूर्ववत्।राजन्य श्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैः वेष्टयित्वा राजन्यमग्नौ प्रास्यत्ब्राह्मण्याःपूर्ववत्।एवं वैश्योराजन्यायां शूद्रश्चराजन्यावैश्ययोरिति । महापथमनुव्राजयेदिति राजमार्गेण पुनरावर्त्तयेत् निस्सारयेदित्यर्थः।एतज्ज्ञाने अज्ञानतः शूद्रस्य ब्राह्मणीगमने द्वादशवार्षिकं क्षत्रियागमने नववार्षिकं वैश्यागमने षड्वार्षिकम् । अज्ञानतो ब्राह्मणीगमने वैश्यस्य नववार्षिकं । अज्ञानतो ब्राह्मणीगमने क्षत्रियस्य षड्वार्षिकं यथा प्रचेताः शूद्रस्य ब्राह्मणीं मोहाद्गच्छतः शुद्धिमिच्छतः । पूर्णमेव व्रतं देयं माता यस्माद्धि तस्य सा ॥ पादहान्यन्यवर्णासु गच्छतः सार्वपर्णिकम्। प्रायश्चित्तमिदं देयमगम्यागमने क्रमात् ॥

अत्रायं संक्षेपः अज्ञानतः शूद्रस्य ब्राह्मणीगमने द्वादशवार्षिकं क्षत्रियागमने नववार्षिकम् वैश्यागमने षड्वार्षिकम् । वैश्यस्य ब्राह्मणीगमने नववार्षिकं

क्षत्रियागमने षड्वार्षिकम् । क्षत्रियस्य ब्राह्मणीगमने षड्वार्षिकम् । यत्तु प्रातिलोम्ये वधः पुसां स्त्रीणान्नासादिकर्त्तनम् इतिशङ्खवचनं तद्यथोक्तमरणप्रायश्चित्तानाचरणे दण्डंविदधाति, नतु प्रायश्चित्तमिति ॥ इति प्रतिलोमगमनप्रायश्चित्तनिर्णयः सम्पूर्णः ॥

अथ स्वभार्यायाम्मातृत्वादिना वदतः प्रायश्चित्तम् । यमः क्रोधान्मोहाद्वदन् भार्य्याम्मातरं भगिनीमपि । प्राजापत्यव्रतं कुर्य्यात्सर्ववर्णेष्वयं विधिः ॥ त्यागानन्तरं संग्रहे मत्स्यपुराणे क्रोधाद्यदि त्यजेद्भार्य्यां वयस्थां च गुणाधिकाम् । ऋषिचान्द्रायणं कृत्वा पुनः संग्रहमादिशेत् ॥ ऋषिचान्द्रायणमाह मनुः त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः । हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम् ॥ एतदशक्तौ धेनुचतुष्टयं दद्यात् ॥

अथ गोमांसभक्षणप्रायश्चित्तम् ॥ सुमन्तुः गोमांसभक्षणे चैव प्राजापत्यं चरेदिति इदमज्ञानतः सकृद्विषयम् । ज्ञानेतु द्वैगुण्यं । ज्ञानाभ्यासे तु पराशरः अगम्यागमने चैव मद्यगोमांसभक्षणे । शुद्ध्यै चान्द्रायणं कुर्य्यान्नदीं गत्वा समुद्रगाम् ॥ अनडुत्साहितां

गां च दद्याद्विप्राय दक्षिणाम् ॥ शङ्खः गामश्वं कुञ्जरोष्ट्रौ च सर्वं पञ्चनखन्तथा । क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात्संवत्सरं व्रतं ॥ तथा भुङ्क्त्वेत्यर्थः । एतच्च चिरतरकालाभ्यासे, पंचनखं शशकादिपंच नखातिरिक्तम् । संवत्सरव्रते पंचदशधेनवः । एतत् प्रायश्चित्तान्ते पुनरुपनयनमाह विष्णुः विड्वराह ग्रामकुक्कुटनरगोमांसभक्षणे च सर्वेषां द्विजातीनां प्रायश्चित्तान्ते पुनः संस्कारं कुर्य्यादिति ॥

अथ रेतोमूत्रपुरीषादिभक्षणप्रायश्चित्तम् ॥ वृह स्पतिः अमेध्यानामपेयानामभक्षस्य च भक्षणे । रेतोमूत्रपुरीषाणां शुद्ध्यै चान्द्रायणं चरेत् ॥ अज्ञाने तु गौतमः मूत्रपुरीषरेतसां प्राशने तप्तकृच्छ्रमिति उभयत्र संस्कारः यथा याज्ञवल्क्यः अज्ञानात्तु सुरां पीत्वा रेतो विण्मूत्रमेव च । पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ यत्तु विण्मूत्रभक्षणे विप्रः प्राजापत्यं समाचरेदित्यापस्तम्ववचनं तद्बलात्कारविषयमितिशूलपाणिः । ऊनैकादशवर्षीयवालविषयमितिस्मार्त्ताः । अत्र क्षत्रियादीनां पादपादहानिः । याज्ञवल्क्यः पलाण्डुम्विड्वराहं च छत्राकं ग्रामकुक्कुटम् । लशुनं गृंजनं चैव भुक्त्वा चान्द्रायणं चरे

त् ॥ एतज्जानतः । अज्ञानात्तप्तकृच्छ्रमिति शूलपाणिः । एषु प्रायश्चित्तान्ते पुनः संस्कारं कुर्य्यादिति विष्णुवचनात् । पुनः संस्काराकरणे तु चान्द्रायणमिति शूलपाणिः । उपनयनाचरणे तु विशेषयति मनुः पवनम्मेषलादण्डौ भैक्ष्यचर्य्याव्रतानि च । निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्म्मणि ॥ अत्र स्वाध्यायाद्यपेक्षापि नास्तीत्याह यमः विप्रस्य क्षत्रियस्यापि मौंजी स्यादुत्तरायणे । दक्षिणेपि विशां कार्य्या नानध्याये न संक्रमे ॥ अनध्यायेपि कुर्वीत यस्य नैमित्तिकं भवेत् । आपिना दक्षिणायनकृष्णपक्षयोः समुच्चयः । मलमासादिदोषोप्यत्र नास्ति, नैमित्तिकत्वादिति । नैमित्तिकानि कर्म्माणि निपतन्ति यदा यदा । तदा तदैव कार्य्याणि न कालस्तु विधीयते ॥ इति गोमांसभक्षणप्रायश्चित्तम् ॥

अथाभोज्यान्ना ब्राह्मणादयः तत्र बृहद्यमः नटनर्तकतक्षाणश्चर्म्मकारः सुवर्णकृत् । शौण्डिकाः काण्डिकाः षण्ढा अभोज्यान्नाःप्रकीर्त्तिताः ॥ कर्णिकाश्चर्म्मिणश्चैव सूत्रका घोषकास्तथा । चक्रोपजीवी रजकः कैवर्त्तास्तस्करास्तथा ॥ अजोपजीविनश्चैव शूद्राध्यापकयाजकाः । चित्रोपजीवी शिल्पी च

वार्द्धुषी ब्रह्मविक्रयी॥वृथाश्रमी तथा यःस्यादाश्रमाणां च भेदकः।पुण्यविक्रायिको यश्च योनिसंकरजातयः॥रं गोपजीवी दत्ताशी परिविन्तिश्च वीरहा। भिषजोगरद श्चैव भगजीवी तथैव च॥ कर्म्मस्वेतेषु यो मोहाद्ब्राह्म णो वर्तते सदा ।प्रायश्चित्ते ह्यनाचीर्णे परिहार्य्यो भवेत्सताम्॥ तेषान्तु ब्राह्मणो भुक्त्वा कृत्वा चैव प्रति ग्रहं। प्राजापत्येन शुद्ध्येत्तु ततः पापान्न संशयः॥ इदं ज्ञानतः।अज्ञानत स्त्र्यहम् । तथा च मनुः भुक्त्वा तोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम्।मत्या भुक्त्वा चरेत्कृच्छ्रं रेतोविण्मूत्रभक्षण इति॥विण्मूत्रभक्षणे च मत्याऽमत्याइतियोज्यम्।चर्म्मिणोव्याधाः, चक्रोपजी वी तैलनिष्पादकः।शाकटिकश्चेत्येके। वृथाश्रमी वेदवा ह्यजटाधारणादिमन्तः ब्रह्मचर्य्याद्याश्रमधर्म्माणाम पालकोवा, आश्रमाणाञ्च भेदकः तद्विरुद्धकारित्वान्त द्भ्रंशक इतिलक्ष्मीधरः।योनिसङ्कारिकश्च सजातीयवि जातीयस्त्रीगामी, दत्ताशीस्थाने कुण्डाशीइतिपाठः या नारी जारात्सुतमुत्पादयाति पत्यौ जीवति स सुतः कुण्डः तस्यान्नमश्नाति यः स कुण्डाशी ।वीरहा पु त्ररहितो नष्टाग्निर्वा॥

अथ कलविङ्गादिभक्षणे त्र्यहोपवासमाह वि-

ष्णुः कलविङ्कहंसमद्गुचक्रवाकरज्जुदालकसारस दात्यूहशुकसारिकाकोकिलखञ्जरीटाशने त्रिरात्र मुपवसेदिति। इदमज्ञानतः सकृद्भोजने। ज्ञाने द्वैगु ण्यमिति ॥

अथ विडालाद्युच्छिष्टभोजनप्रायश्चित्तम् ॥ तत्र मनुः विडालकाकाद्युच्छिष्टं जग्ध्वा श्वनकुलस्य च। केश कीटावपन्नञ्च पिवेद्ब्रह्मसुवर्च्चलाम् ॥ ब्रह्मसुवर्च्चला पीतकुसुमं सूर्य्यावर्त्तम् ताञ्च पीत्वा दिनमेकमतिवा हनीयम्। इदमज्ञानतः। ज्ञानतस्त्र्यहम् यथा शङ्खः दू षितं केशकीटैश्च मार्ज्जारैर्म्मूषकैस्तथा । मक्षिकाम शकैश्चैव त्रिरात्रन्तु व्रतञ्चरेत् ॥ केशस्समूलः। व्रतं गो मूत्रयावकेन, तदशक्तौ किञ्चिदूनसार्द्धपुराणन्देयमि दं सकृद्भोजने ॥

अथ विण्मूत्रादिदूषितकूपादिजलपानप्रायश्चित्त म् ॥ कूपे विण्मूत्रसंस्पृष्टे पीत्वा तोयन्द्विजोत्तमः। त्रिरात्रन्तु विशुद्ध्येन्तु कुम्भे सान्तपनं स्मृतम्। इद मज्ञानतः। ज्ञानतो द्वैगुण्यमिति। सान्तपनमाह ब्रह्म पुराणम् प्रथमेहनि नाश्नीयाद् गोमूत्राशी ततः पु नः। तृतीये गोमयाशी स्याच्चतुर्थे क्षीरपो भवेत् ॥ पञ्चमे दधिभुक् चैव घृतं षष्ठे पिवेदथ। कुशोदकं

सप्तमे च कृच्छ्रस्सान्तपनो विधिः । अत्र धेनुद्वयमिति भवदेवः । पादोनधेनुचतुष्टयमितिशूलपाणिः ॥

अथाभक्ष्यमृतपञ्चनखदूषितजलपाने प्रायश्चित्तम् ॥ आपस्तम्बः अन्तः स्थितेषु क्लिन्नेषु सर्व्वपञ्च नखेषु च । पिबेदपो यः कूपेषु षड्रात्रेण विशुद्ध्यति ॥ अक्लिन्नेषु त्रिरात्रं स्याच्छूद्राणान्दिनमेव तु। अक्लिन्नेषु सर्व्वपञ्चनखेष्वित्यन्वयः । एतच्च मानुषेतरशवविषयम् यथादेवलः । ल्किन्नोभिन्नः शवश्चैव कूपस्थो यदि दृश्यते । पयः पिबेत्त्रिरात्रन्तु मानुषे द्विगुणं स्मृतम् ॥ एतदकामतःसकृत्पाने। कामाभ्यासे त्वाह क्लिन्ने भिन्ने शवे चैव कूपस्थे यदि तत्पिबेत् । पराकेन विशुद्धिःस्या द्ब्राह्मणानाञ्च भोजनात् ॥ अत्यन्ताभ्यासे आह । क्लिन्ने भिन्ने शवे चैव तत्रस्थं यदि कं पिबेत् । शुद्ध्यै चान्द्रायणं कुर्य्यात्तप्तकृच्छ्रमथापि वा इति लघुहारीतात् ॥

अथापेयक्षीरपानप्रायश्चित्तम् ॥ तत्र सकृत्कामतः पाने उपवसेदेकाहमित्यनुवृत्तौ यमः । अनिर्द्दशाहं गोक्षीरमाजं माहिषमेव च । आविकं सन्धिनीक्षीरमौष्ट्रमेकशफन्तथा ॥ वर्ज्जयेद्गोर्व्विवत्सायाः पयश्चैवान्यवत्सया । आरण्यानाञ्च सर्व्वासां वर्ज्जयि

त्वा च माहिषम् ॥ क्षीराण्येतान्यपेयानि द्विजातीनां सदैव हि ॥ शङ्खः सर्व्वासां द्विस्तनीनां क्षीरमभोज्यम जावर्ज्जमिति ॥

अथ गोगमनप्रायश्चित्तम् ॥ तत्र विष्णुः गोव्रतं गोगमने च प्रायश्चित्तम्।गोव्रतं शूद्रस्वामिकगोवधोक्तम् तत्र धेनुचतुष्टयम्।इदं सकृद्गमने। अभ्यासे तु शंखः गोष्ववकीर्णःसम्वत्सरं प्राजापत्यञ्चरेत्। तत्र त्रिंशद्धेनवः। अत्यन्ताभ्यासे तु गौतमः गवि तु गुरुतल्पैस्समिति। तत्र द्वादशवार्षिकमशीत्युत्तरशतधेनवो देयाः। निरन्तरसम्वत्सराभ्यासे मरणान्तिकमेवेति शूलपाणिः ॥

अथ परिवेदनादिप्रायश्चित्तम् ॥ तत्र हारीतः ज्येष्ठेऽ निर्व्विष्टे कनीयान् निर्व्विशन् परिवेत्ता भवति, परिविन्नोज्येष्ठः, परिवेदनीया कन्या, परिदायी दाता, परिकर्त्ता याजकः, सर्वे ते पतिताः सम्वत्सरं प्राजापत्येन कृच्छ्रेण यापयेयुः। एवं ज्येष्ठायां सत्यां कनिष्ठाविवाहेपि यथा ज्येष्ठायां विद्यमानायां कनिष्ठोढा भवेद्यदि। सा चाग्रेदिधिषुर्ज्ञेया पूर्व्वोक्ता दिधिषुः स्मृता इति॥अत्र त्रिंशद्धेनवः।इदन्तु ज्येष्ठमुद्दिश्य कन्यात्यागानन्तरङ्कार्य्यमिति ॥

अथ व्रात्यप्रायश्चित्तम् ॥ तत्र विष्णुः येषां द्विजानां सावित्री नानुच्येत यथाविधि । तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनापयेत् ॥ अत्र धेनुत्रयम् । एतच्च पितृमातृरहितस्य निःस्वजनस्य सावित्रीपाते । आलस्यानवधानादिना सावित्रीपाते तु शंखलिखितौ व्रात्यश्चान्द्रायणं कुर्य्याद्गोप्रदानं चेति । व्रात्यश्च पंचदशवर्षात्परम् यथा यमः पतिता यदि सावित्री दशवर्षाणि पंच च । ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः ॥ प्रायश्चित्तं भवेत्तेषां प्रोवाच वदताम्वरइति ॥

अथ ऋतौ भार्य्यानभिगमनप्रायश्चित्तम् ॥ विष्णुः पर्वानारोग्यवर्ज्जमृतावगच्छन् पत्नीं त्रिरात्रमुपवसेत् । अत्र चतुर्विंशतिपणाइति । एतदप्रोषितस्य नीरुजस्य सकृज्ज्ञानतः । ज्ञानाभ्यासे प्राजापत्यम् । अज्ञाने प्राणायामशतं तत्र द्वादशपणाइति ॥

अथ रजस्वलागमनप्रायश्चित्तम् ॥ तत्र याज्ञवल्क्यः त्रिरात्रेण घृतं प्राश्य गत्वोदक्यां शुचिर्भवेत् । त्रिरात्राशक्तौ द्वादशपणाइति एतत्कामतस्सकृद्गमने । अज्ञानेऽर्द्धमिति । अभ्यासे प्रायश्चित्तावृत्तिरिति । श्राद्धदिने मैथुने तु दिनमेकमभोजनमिति यथा यमः वेदो

दितानां नित्यानाङ्कर्म्मणां समतिक्रमे । स्नातक व्रतलोपे च दिनमेकमभोजनम् ॥ स्नातको गृहस्थः॥

अथाऽमनुष्यादिगमनप्रायश्चित्तम् ॥ अमानुषी ष्वनङ्गे च उदक्यायामयोनिषु । रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनञ्चरेत्॥सांतपने धेनु द्वयम् । अमानुषीषु वडवादिषु, अनङ्गे भूम्यादौ, अयोनिषु स्त्रियाअपि योनीतरस्थानेषु ॥

अथ पितृष्वस्रादिसुतापरिणयनप्रायश्चित्तम्॥यथा मनुः पितृष्वस्रसुतां मातुलसुतां मातृष्वसृसुतां मातृसगोत्रां समानार्षेयीं विवाह्य चान्द्रायणञ्चरेत् परित्यज्य चैनां विभृयात् । मातृसगोत्रां मातामहस्य सप्तपुरुषान् यावदिति शूलपाणिः । पञ्चमपुरुषानिति केचित् ॥

अथ पतितप्रतिग्रहप्रायश्चित्तम्॥बृहस्पतिः पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च । मासोपवासङ्कुर्व्वीत चान्द्रायणमथापि वा ॥ ज्ञानाभ्यासे मासोपवासः । अज्ञानाभ्यासे चान्द्रायणम् । सकृदज्ञानेचान्द्रायणार्द्धमिति । मासोपवासे पंचदश धेनवः । सम्वत्सरेण मासाशी पूयते नात्र संशयः । इत्यङ्गिरोवचनेन द्वादशवार्षिकव्रतस्य वैकल्पिकत्वात् ॥

अथ मणिमुक्तादिस्तेयप्रायश्चित्तम् ॥ तत्र मनुः मणिमुक्ताप्रवालानां सर्व्वस्याश्ममयस्य च । अयः कांश्योपलानांच द्वादशाहङ्कणान्नता ॥ कणान्नता कणभक्षणम् , अत्र षडुपवासाः जाबालः रजताश्व गोभूमिकन्यानां सकृद्धरणे चान्द्रायणम् । एतच्चापहृतद्रव्यदानपूर्व्वकङ्कर्त्तव्यम् यथा विष्णुः दत्वैवापहृतं द्रव्यं धनिकस्याभ्युपायतः । प्रायश्चित्तन्ततः कुर्य्यात्कल्मषस्यापनुत्तये ॥ अत्र सकृदभ्यासकृतकालदेशद्रव्यापहर्त्तृस्वामिगुणदोषदैन्यकामाकामाद्यपेक्षया उत्कृष्टापकृष्टद्रव्यापहारे वैषम्यदोषस्समर्थनीयइति शूलपाणिः ॥

अथातिपातकप्रायश्चित्तम् ॥ अत्रातिपातकिनां ज्ञानतोऽज्ञानतोप्यग्निप्रवेशेन मरणप्रायश्चित्तम् यथा विष्णुः मातृगमनं दुहितृगमनं स्नुषागमनं चातिपातकानि । अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् । नह्यन्या निष्कृतिस्तेषाम्विद्यते हि कथंचन ॥ कथंचनेत्युपादानात् ज्ञानतोऽज्ञानतश्चेत्यर्थः ॥

अथ महापातकसामान्यप्रायश्चित्तम् ॥ तत्र शंखः नित्यं त्रिषवणस्नायी कृत्वा पर्णकुटीम्वने । अधः शायी जटाधारी पर्णमूलफलाशनः ॥ ग्रामं विशेन्तु

भिक्षार्थी स्वकर्म्म परिकीर्त्तयन् । एककालं समश्नी याद्वर्षैतु द्वादशे गते ॥ रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः । व्रतेनानेन शुद्ध्यन्ति महापातकिन स्त्विमे ॥ यथाङ्गिराः षड्भिर्व्वर्षैः कृच्छ्रचारी ब्र ह्महा पूयते नरः॥वर्षव्यापकप्राजापत्यकरणे तस्य द्वाद शाहसाध्यत्वेन त्रिंशत्प्राजापत्यानि भवन्ति।एवं षड्व र्षाचरणे साशीतिशतप्राजापत्यानि तेन द्वादशवार्षि क षट्वार्षिकयोर्न्न विरोधः। अत्र द्वादशवार्षिकव्रते हि साशीतिशतप्राजापत्यानि साशीतिशतपयस्वि धेनवः।तन्मूल्यानि चत्वारिंशत्कार्षापणाधिकपञ्च श तकार्षापणा वा इति चत्वारः कल्पाः। ननु साशीतिश तधेनुदानं कथमत्र लब्धमिति चेत् अवेहि यतोऽ ङ्गिरसाऽज्ञानकृते ब्रह्मवधे गते तु द्वादशे वर्षे ब्रह्म हा पूयतेनर इत्यभिधाय ज्ञानकृते तत्र द्वैगुण्ये चतुर्व्वि शत्वार्षिके वक्तव्ये गवां सहस्रं विधिवद्विप्रेभ्यः प्रति पादयेत्। ब्रह्महा वै प्रमुच्येत सर्व्व पापेभ्य एवहीति गोसहस्रदानमुक्तम् तच्च चतुर्व्विंशतिवार्षिकानुक ल्पसषष्टिपयस्विधेनुशतत्रयदानगोसहस्रदानयोर्म्मू ल्येन तत्वविधानार्थं, तेन धेनुमूल्यं सपादकपर्द्दकद्व याधिककाकिनीत्रयशून्यं पुराणत्रयम् अन्यथा यदि

पयस्विधेनुमूल्यं यथाश्रुतं पुराणत्रयंयादि स्यात्तदा वैषम्यं स्यात् यतःसषष्टिपयस्विधेनुशतत्रयमूल्यमशीत्युत्तरकार्षापणसहस्रंस्यात् १०८० गोसहस्रमूल्यन्तु सार्द्धकार्षापणद्वयाधिकषष्ट्युत्तरकार्षापणसहस्रं स्यात् १०६२॥, अतः सषष्टिपयस्विधेनुशतत्रयमूल्येन सार्द्धसप्तदश १७॥. कार्षापणाधिक्यादिति शूलपाणिना चानयोर्वैषम्य माकलय्य द्वादशवार्षिकमहाव्रतधेनुसङ्कलने पयस्विधेनुमूल्यं किञ्चिन्न्यूनकार्षापणत्रयं गोमूल्यं सप्तदशकार्षापणाइति लिखितम् तदनिर्णीतन्निर्णयकारेण निर्णीतमिति सुधीभिर्व्विभाव्यम् ॥

अथ ब्रह्मवधे प्रायश्चित्तम् ॥ तत्र ज्ञानतोब्रह्मवधे सर्व्ववर्णानाम्मरणमेव प्रायश्चित्तम् यथा । मनुः लक्ष्यं शस्त्रभृताम्वा स्याद्विदुषामिच्छयात्मनः । प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥ लक्ष्यमित्यनेन मृतश्शुद्ध्यति । जीवन्नपि शुद्ध्यतीति । संग्रामे वा हतोलक्षीभूतः शुद्धिमवाप्नुयात् । मृतकल्पः प्रहारार्त्तोजीवन्नपि न दुष्यतीति याज्ञल्कीयात् ॥ विदुषां पातकसंशोधनार्थमयं लक्षीभूतइति विजानताम् । अज्ञानकृते तु भैक्ष्यमात्मविशुद्ध्यर्थं कृ

स्वा शवशिरोध्वजामितिमनुवचनात् शवशिराश्च ह्नितभैक्ष्यसहितद्वादशवार्षिकम् । अश्वमेधगोशवा भिजिद्विश्वाजिदग्निष्टोमान्यतमयागकरणम् । तथा ऋग्यजुस्सामाथर्व्वणामेकतरपठनम् । तथा ब्रह्म चर्य्यपूर्व्वकं सेतुदर्शनम् । तथा वेदविदे सर्व्वस्व दानं । तथा जीवनकालव्यापिधनदानं वा द्वादश वार्षिकोपभोग्यद्रव्यसहितगृहदानम्वा । तथा हवि ष्यभुजः सरस्वत्याः प्रतिस्रोतः सन्तरणम्वा प्राय श्चित्तम् । यथा मनुः यजेद्वाश्वमेधेन स्वर्ज्जिता गो शवेन वा । अभिजिद्विश्वजिद्भ्याम्वा त्रिवृत्ताग्नि ष्टुतापि वा॥ जपेद्वान्यतमम्वेदं योजनानां शतंब्रजेत्। ब्रह्महत्यापनोदार्थम्मितभुक्संयतेन्द्रियः । सर्व्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ।धनम्वा जीवनायालं गृहं वा सपरिच्छदम् ॥ हविष्यभुग्वानुसरेत्प्रतिस्रोत स्सरस्वतीम् ॥ गोशवेनेति स्वर्जितेत्यस्य विशेषणम् भविष्ये त्रयोदशत्वश्रुतेः । क्षत्रियादीनान्तु ब्रह्मव धे प्रायश्चित्तद्वैगुण्यादिकम् यथाङ्गिराः द्विगुणा क्ष त्रियाणान्तु वैश्यानां त्रिगुणास्मृता । चतुर्गुणा च शू द्राणां पर्षदुक्ता महात्मना ॥परिषदुक्तव्रतङ्कुर्य्या च्छु द्धये पापकर्म्मणाम् ।यथाविधानमनादृत्य लौकिकयु

क्तेरेवादरणम् परिषत् महात्मना मनुना उक्ता व्यव स्थिता न तु क्षत्रियादीनां पादपादहानिर्व्यवस्थि ता। अनेकब्राह्मणवधेपि तन्त्रत्वादेकमेव प्रायश्चित्त म्। तन्त्रत्वञ्च समानदेशकालकर्तृत्वेनापि गृह्यमाण विषयत्वम् अधिकाङ्गेन न्यूनाङ्गकसिद्धिप्रसङ्ग इतिन्यायात् ब्रह्मवधप्रायश्चित्तेन प्रसङ्गात् क्षत्रिया दिवधप्रायश्चित्तसिद्धिरिति । यद्यपि स्यादका मकृते यत्तद्द्विगुणं वुद्धिपूर्व्वके इत्यङ्गिरोवचनात् मरणवैकल्पिकत्वात् द्वादशवार्षिकादिद्वैगुण्यादपिपा पक्षयोभवति तथापि कामतोऽव्यवहार्य्यस्तु वचना दिह जायते इतियाज्ञवल्कीयादव्यवहार्य्यत्वम्। अनु पनीतब्राह्मणवधे तु महापातकित्वम् गर्भहा तु यथावर्णमिति याज्ञवल्क्येन तद्गर्भवधे तद्वर्णप्रा यश्चित्तस्योक्तत्वात् सुतरान्ततोधिकस्य वधे ब्रह्मव धप्रायश्चित्तमिति शूलपाणिः। अत्र द्वादशवार्षिकव्रत स्य दक्षिणामाह पराशरः पूतश्च प्रविशेद्वेश्म ध र्म्मार्थैरुपपद्यते । द्वारि वस्त्रं पवित्राणि भोजनानि विशेषतः ॥ गवाञ्चैव शतन्दद्याच्चातुर्व्विद्याय द क्षिणाम्। अत्र शक्ताशक्तभेदेन दक्षिणाव्यवस्था॥

एष तु संक्षेपः कामतोब्रह्मवधे मरणञ्चतुर्व्विंशतिवा

र्षिकव्रतम्वा। अकामतोद्वादशवार्षिकं तदशक्तावशी
त्युन्तरपयस्विधेनुदानं तदशक्तौ चत्वारिंशत्पुराणो
त्तरपञ्चशतकार्षापणमूल्यं हिण्यादि वा देयम्। दक्षि
णा च गोशतदानं तन्मूल्यं वा, बालवृद्धस्त्री
णामर्द्धम् मरणे तु तन्नास्ति तत्राद्धादिव्यवस्थाया
अभावादिति॥

अथ सुरापानप्रायश्चित्तम्। तत्र सुरामद्ययोर्भेद
माह, पुलस्त्यः माध्वीकं पानसन्द्राक्षंखार्ज्जूरन्ताल
मैक्षवम्। माक्षिकं टाङ्कमाधूकमैरेयन्नारिकेलज
म्॥ समानानि विजानीयान्मद्यान्येकादशैवतु। द्वाद
शन्तु सुरामद्यं सर्व्वेषामधमं स्मृतम्॥एकादशमद्यपा
ने क्षत्रियादीनां दोषाभावमाह वृद्धयाज्ञवल्क्यः
कामादपि हि राजन्यो वैश्यो वापि कथञ्चन। मद्य
मेव सुरांपीत्वा न दोषं प्रतिपद्यते इति॥सुरांपैष्टीराहिता
म्। अन्नविकारविशेषोमदहेतुःसुरा,सुरा वै मलमन्ना
नां पाप्मा च मलमुच्यते। तस्माद्ब्राह्मणराजन्यौवैश्य
श्च नसुरां पिवेत् इतिमनूक्तेः तेन क्षत्रियविशोः पैष्टी
पाने पातित्यम्। ब्राह्मणस्य गौडीपैष्टीमाध्वीपाने पा
तित्यम् यथा हारीतः गौडीपैष्टी च माध्वी च विज्ञेया
त्रिविधा सुरा। यथैवैका तथा सर्व्वा न पातव्या द्वि

जोत्तमैरिति ॥ केवलभुक्तजनिता सुरा पैष्टी। द्विजाना म्मध्ये उत्तमा द्विजोत्तमाब्राह्मणाइत्यर्थः समासस्तु छान्दसः तेन वृद्धयाज्ञवल्क्येन सह न विरोधः। क्षत्रियवैश्ययोः सकृज्ज्ञानतः सुरापाने प्राणान्तिकम्। ब्राह्मणस्य गौडीपैष्टीमाध्वीनामन्यतमस्य सकृज्ज्ञानतः पाने प्राणान्तिकञ्चाह याज्ञवल्क्यः सुराम्बु घृतगोमूत्रपयसा मग्निसन्निभम् । सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति ॥ बृहस्पतिः सुरापाने कामकृते ज्वलन्तीन्ताम्विनिःक्षिपेत्। तया मुखे विनिर्दग्धे ततः शुद्धिमवाप्नुयादिति ॥ ब्राह्मणस्य सुरोपलक्षणम् गौडीमाध्वीपानेपि, अज्ञानतः सकृत्पैष्टीगौडीमाध्वीपाने ब्राह्मणस्य द्वादशवार्षिकम्, क्षत्रियस्य पैष्टीपाने नववार्षिकम्, वैश्यस्य पैष्टीपाने षड्वार्षिकम्, यथा ब्रह्महत्यानुवृत्तौयमः चरेतामेतदेवोभौ सुरापगुरुतल्पगौ। सगोत्रादूषकश्चैव सुवर्णस्तेयकृन्नरः ॥ एतद्द्वादशवार्षिकम् । क्षत्रियविशोरत्रपादपादहानिः । विप्रे तु सकलन्देयं पादोनं क्षत्रिये मतमितिवचनात्। ज्ञानतस्तयोरपि मरणमेव प्रायश्चित्तम् तत्र पादपादहान्याद्यसम्भवादिति तत्र सुरापाने निषेधोयं जात्याश्रयइतिस्थितिरितिसनत्कुमारव

चनम् पञ्चवर्षमध्येपि प्रायश्चित्तबोधकं। ततोन्यूनतर स्यास्य नापराधो न पातकमित्यङ्गिरोवचनन्तु ब्राह्म णस्य सुरापानेतरविषयम् जातमात्रः शिशुस्तावद्या वदष्टौ समावयः । सहिगर्भसमो ज्ञेयोऽव्यक्तिमात्र प्रदर्शकः॥भक्ष्याभक्ष्ये तथापेये वाच्यावाच्येतंथानृते। अस्मिन् काले न दोषः स्यात्सयावन्नोपनीयते इति कुमारवचनञ्च तत्सुरापानेतरविषयम्, पूर्व्वजन्मकृत योः सुवर्णापहारसुरापानयोर्न्नरकोपभोगक्षीणयोर पि सुवर्णचौरः कुनखी सुरापः श्यावदन्तकइत्यनु मितयोः किञ्चिदवशिष्टत्वात् स्वल्पप्रायश्चित्तमाह वशिष्ठः कुनखीश्यावदन्तश्च कृच्छ्रंद्वादशरात्रं चरि त्वोद्धरेयातान्तद्दन्तनखमिति । विष्णुः कुष्ठ्यतिपात की ब्रह्महा यक्ष्मी सुरापः श्यावदन्तकः सुवर्णहारी कु नखी गुरुतल्पगोदुश्चम्र्मोति। कुष्ठी तु व्रणवान् सर्व्व गात्रेषु कण्ठे भाले तथा नसीति भविष्यपुराणोक्तेः। श्यावदन्तः स्वभावतः कृष्णदन्तः, कुनखी सङ्कुचि तनखः, दुश्चर्म्माऽप्रावृतमेढ्रः, अतएवामीषां श्राद्धा दिषु परिहारः अत्र वहूनामेकधर्म्माणामितिवचना त् सर्वेषाम्महापातकशेषमुक्तानां तुल्यं प्रायश्चित्त म् । अतिपातकशेषयुक्तानां द्विगुणमिति द्वादशरा

त्रसाध्यं पराकरूपं प्रायश्चित्तमिति । अकृतप्रायश्चित्तस्य दाहे दाहकस्य यतिचान्द्रायणेन विशुद्धिः । यथा भविष्यपुराणे षण्मासीयस्त्रिमासीयो मृतः कुष्ठी कदाचन।यदि स्नेहाच्चरेद्दाहं यतिचान्द्रायणं चरेत्॥ यतिचान्द्रायणाशक्तौ धेनुन्दद्याच्चातुष्टयमिति ॥

एष तु संक्षेपः अज्ञानतो ब्राह्मणक्षत्रियवैश्यानां सुरापाने ब्राह्मणस्य द्वादशवार्षिकम् । क्षत्रियस्य नववार्षिकम् । वैश्यस्य षट्वार्षिकव्रतम् ॥ ज्ञानतः सर्वेषां मरणं चतुर्विंशतिवार्षिकम्वा बालवृद्धस्त्रीरोगिणामर्द्धम् । शूद्रस्यप्रायश्चित्तबोधकवचनाभावात् प्रायश्चित्ताभावइतिकिन्तु यत्कर्तृकसुरापानंतदन्नभोजननिमित्तकप्रायश्चित्तं करणीयमिति सर्वञ्चरमणीयतमम् इति सुरापानप्रायश्चित्तम् ॥

अथ सुवर्णस्तेयप्रायश्चित्तम् ॥ तत्र ब्राह्मणस्य सुवर्णापहरणं महापातकम् यथा हारीतः ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं । गुरुदाराभिगमनं संयोगश्चतैस्सहेति पंच महापातकानि । अत्र ब्राह्मणेतिविशेषणात् क्षत्रियादिसुवर्णापहरणं न महापातकं किन्तूपपातकं ।सुवर्णस्तु पंचकृष्णलकोमाषस्तैस्सुवर्णस्तु षोडशेति मनूक्ताशीतिरक्तिकापरिमितं

हेम्नः, तदपहार एवच महापातकं नतु यन्न्यूनजातिमात्रापहारइति अन्यथा तत्र प्रायश्चित्तविशेषोपदेशोव्यर्थस्स्यात् यथा षड्विंशन्मतं सुवर्णादल्पहरणे वत्सरःपरिकीर्त्तितइति अल्पहरणे सुवर्णस्य द्वादशभागक्रमेण किंचिन्न्यूनसप्तरक्तिकाहरणे इत्यर्थः तेन संवत्सरव्रते पंचदश धेनवः एवं द्वादशांशस्य द्विगुणादिहरणे द्विवार्षिकमित्यादि तदर्द्धहरणे षाण्मासिकव्रतमिति। इदमज्ञानतः। ज्ञानतोद्वैगुण्यम्। ज्ञानतःसुवर्णापहरणे वशिष्ठःनिष्कालिकोघृताक्तोवागोमयाग्निना पादप्रभृत्यात्मानं दाहयेत् ततःपूतोभवतीतिविज्ञायते। निष्कालिकः केशश्मश्रुलोमनखरहितः। अज्ञानतस्तुद्वादशवार्षिकमेव यथ शङ्खः अधश्शायी जटाधारी पर्णमूलफलाशनः। एककालं समश्नानो वर्षे तु द्वादशेगते॥ रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः। व्रतेनैतेन शुद्ध्यन्ति महापातकिनस्त्विमे॥ अत्र क्षत्रियादीनां परिषद्द्वैगुण्यात् परिषदुक्तव्रतङ्कुर्यादित्यनेनाज्ञानतोद्वादशवार्षिकम्। ज्ञानतोमरणं। मरणवैकल्पिकं चतुर्विंशतिवार्षिकादिकं वा। ब्राह्मणस्य तु ज्ञानतोद्वादशवार्षिकम्। अज्ञानात् षड्वार्षिकमितिशूलपाणिः। भवदेवस्तु ज्ञानतस्सर्वेषां

न्मरणं चतुर्विंशतिवार्षिकम्वा । अज्ञानतोब्राह्मणस्य
द्वादशवार्षिकम् । क्षत्रियादीनां पादपादहानिः।परिष
द्वैगुण्यादिकन्तु प्रकरणाद्ब्रह्मवधविषयकमित्याह ॥ इ
ति सुवर्णस्तेयप्रायश्चित्तनिर्णयः ॥

अथ गुर्वङ्गनागमनप्रायश्चित्तनिर्णयः ॥ गुरुरत्र
पिता यथा मनुः । निषेकादीनि कर्म्माणि यः करोति
यथा विधि । सम्भावयति चान्येन स विप्रो गुरुरुच्य
ते ॥ निषेकादीनि गर्भाधानादीनि, तस्याङ्गना मा
तुस्सपत्नी । सा च गन्तारमपेक्ष्य सवर्णोत्तमवर्णा वा
न तु हीनवर्णा तद्गमनस्यानुपातकत्वात् । अत्र प्राय
श्चित्तमाहाङ्गिराः । गुरुतल्पी शिलान्तप्तामायसीं
वा स्वयम्विशेत् । उत्कृत्य वृषणौ वापि धारयेत्
स्वयमञ्जलौ ॥ मरणायाथ वापद्ध्यां प्रव्रजेद्दिशमुत्त
राम् । शरीरस्य विमोक्षेण मुच्यते कर्म्मणोऽशुभात् ॥
महाव्रतञ्चरेद्वापि दद्यात्सर्वस्वमेव वा । गुर्वर्थे वा हतो
युद्धे मुच्यते गुरुतल्पगः ॥ एतन्मरणान्तिकम् ज्ञान
कृते महाव्रतं चतुर्विंशति वार्षिकम् । अज्ञानकृते
द्वादशवार्षिकम् । यथा द्वादश वार्षिकमभिधायाह
शङ्खः रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
व्रतेनैतेन शुद्ध्यन्ति महापातकिनास्त्विमे ॥ इति गुर्व

ङ्गनागमनप्रायश्चित्तम् ॥

अथ संसर्गप्रायश्चित्तनिर्णयः ॥ तत्र मनुः यो येन पतितेनैषां संसर्गं याति मानवः।स तस्यैव व्रतङ्कुर्यात्तत्संसर्गविशुद्धये।पतितशब्दोत्र पापान्वितपरः यथा जाबालः संसर्गी येन संसर्गं कुर्यात्तद्व्रतमाचरेदिति तेन नवविधपापान्वितानां मध्येयो येन पापीयसा संसर्गं कुर्यादित्यर्थः । व्रतन्तु पादोनम् यथा व्यासः योयेन संसृजेद्वर्षं सोपि तत्समतामियात् । पादैर्न्यूनं चरेत्सोपि तस्य तस्य व्रतन्द्विजः ॥ यद्यपि मरणे पादहानिर्न्न संभवति तथापि मरणवैकल्पिकचतुर्विंशतिवार्षिकव्रतस्य पादोनङ्कर्तव्यमिति।यत्र निरन्तर संवत्सरसंसर्गेण प्रायश्चित्तमुक्तं तत्संवत्सराप्राप्तौ भागहारः कार्यः यथा बृहस्पतिः षाण्मासिके तु संयोगे याजनाध्यापनादिना।एकप्राशनशय्याभिः प्रायश्चित्तार्द्धमाचरेत् ॥ ततोनिरन्तरमासत्रयसंयोगे प्रायश्चित्तपादः।निरन्तरषण्मासंयोगे प्रायश्चित्तार्द्धम् । निरन्तरनवमाससंयोगे पादत्रयमित्यूहनीयम् । एवं मूलपापकर्त्तुः यत् प्रायश्चित्तस्य पादहानिक्रमेण तृतीयसंसर्गिपर्यन्तं प्रायश्चित्तं करणीयम् । वचनाभावात् चतुर्थस्य न किञ्चिदिति । यथा चा

ण्डालसंसर्गे व्यासः ये तदन्नाशिनो विप्राः कृच्छ्रं तेषां विधीयते । तद्भोजिनोऽर्द्धकृच्छ्रेण तदन्नादाश्च पादिनः ॥ यथापस्तंबः भुक्तं यैस्तत्र पक्वान्नं कृच्छ्रं तेषां विधीयते । तेषामपि च यैर्भुक्तमर्द्धन्तेषा म्विधीयते ॥ तेषामन्नन्तु यैर्भुक्तं कृच्छ्रपादो विधीयते । तथा च योयेनेति मनुवचनं संसर्गित्रितयपर मिति बोध्यम् ॥ इति संसर्गप्रायश्चित्तनिर्णयः ॥

अथानुपातकप्रायश्चित्तनिर्णयः ॥ अत्रानुस्सदृशार्थः तेन महापातकसदृशपापमनुपातकमिति यथा मनुः अनृतं च समुत्कर्षे राजगामि च पैशुनम् । गुरोश्चालीकनिर्वन्धः समानि ब्रह्महत्यया ॥ ब्रह्मोज्झिता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः । गर्हितान्नाद्यपोजग्धिः सुरापानसमानि षट् ॥ यमः निक्षेपस्यापहरणं नराश्व रजतस्य च । भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् ॥ रेतस्सेक स्स्वयोन्यासु कुमारीष्वन्त्यजासु च । सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं स्मृतम् ॥ अनृतं च समुत्कर्षे इत्युत्कर्षार्थं शूद्रस्य ब्राह्मणोहमितिवचनं परोत्कर्षकथने न किञ्चिदिति भाषणं वा । अनृतवचनं गुरोर्ज्जन्मदातुर्मृषादोषाभिगमः, सुहृद्वधः ब्राह्मणव्यतिरिक्तामित्रवधः, गर्हितान्नमन्त्यावसायिनामन्नं, ग

र्हिताद्यश्च छत्राकादि, निःक्षेपापहरणं ब्राह्मणस्वामि कमितिशूलपाणिः। स्वयोन्याः योनौ कुले जाता या स्ता योन्याःस्वस्य योन्यास्तासु ।अनृतादिवचन त्रयप्रतिपाद्ययत्तत् ज्ञानतोऽभ्यासेन महापातकसमं द्वादशवार्षिकव्रतार्हम् । अज्ञानतः षट्वार्षिकमिति। रेतःसेकः स्वयोन्यासु इत्युपलक्षणम् यथा विष्णुःपि तृपितृव्यमातामहमातुलश्वशुरनृपपत्न्याभिगमनं गु रुदारगमनसमं॥पितृष्वसृमातृष्वसृगमनञ्च ॥ श्रौत्रि यार्त्त्रिकपुरोहिताऽ पुरोहिताध्यापकामित्रपत्न्याभिगमनं स्वसृसख्याःसंगोत्रायाःउत्तमवर्णायाः अन्त्यजायाःकु मार्या रजस्वलायाःशरणागतायाःप्रव्राजितायाःनिःक्षि प्तायाश्चेत्यभिधाय प्रायश्चित्तमाह अनुपातकिनस्त्वे ते महापातकिनस्तथा । अश्वमेधेन शुद्ध्यन्ति तीर्था नुशरणेन वा इति॥अश्वमेधाद्यकरणे द्वादशवार्षिकव्रत म् तदकरणेऽशीत्युत्तरशतप्राजापत्यानि तदशक्तौअ शीत्युत्तरशतधेनवोदेयाः।तत्रासामर्थ्ये तन्मूल्यानि द्वा त्रिंशत्पुराणाधिकपंचशतकार्षापणा देयाः।एतत् ज्ञान कृतेऽनुपातकेऽगम्यागमनव्यतिरेके वोध्यम्॥अज्ञानत स्तदर्द्धम्॥अत्र मातृपदं गन्तारमपेक्ष्य हीनवर्णाविमा तृपरम्,अन्त्यजा चाण्डाली,कुमारी ब्राह्मणकन्यका॥

अगम्यामाह यमः स्नुषा पितृष्वसा मातृसखी मातृ ष्वसा सुता । मातुलानी स्वसा श्वश्रूर्गत्वा सद्यःप तेद्द्विजः॥एताश्चान्याश्च सततं नियतांपेरवर्जयेत् । एतैरगम्यागमनैस्सद्यःपतति वै द्विजः॥अन्याश्चाह ना रदः माता पितृष्वसा श्वश्रूर्म्मातुलानी पितृष्वसा । पितृव्यपत्नी शिष्यस्त्री भगिनी तत्सखी स्नुषा ॥ दु हिताचार्यभार्याच सगोत्रा शरणागता । अन्त्या प्रव्र जिता धात्री साध्वी वर्णोत्तमा च या ॥ आसामन्यत मां गत्वा गुरुतल्पग उच्यते । शिश्नस्योत्कर्त्तनात्तेषां नान्योदण्डोविधीयते ॥ अन्त्या अन्त्यजा चाण्डाली, अत्राज्ञानतस्सम्पूर्णव्रतं द्वादशवार्षिकं ॥ ज्ञानतस्तु मरणमेव ।यथा अगम्यामभिधाय यमः तथा स्कन्द ति यो मोहाद्गुरुतल्पे प्रयुज्यते।शिश्नस्योत्कर्त्तनं कृ त्वा प्राणत्यागेन शुद्ध्यति ॥ गुरुतल्पेन गुरुतल्पगमन व्रतेनद्वादशवार्षिकेनेतियावत् । एतच्च मातृस्नुषा दुहितृव्यतिरिक्ताऽगम्यागमने वोध्यम् । मात्राद्यभि गमनस्यातिपातकत्वेन ज्ञानाज्ञानाभ्याम्मरणस्योक्त त्वादिति॥चाण्डालान्त्यजस्त्रीणाङ्गभोंत्पादकस्य प्रा यश्चित्ताभावमाह आपस्तम्वः अन्त्यजायां प्रसूतस्य प्रायश्चित्तन्न विद्यते। निर्वासनं कृताङ्कस्य तस्य

कार्यन्न संशयः ॥ निर्वासनं देशाद्वहिष्करणम् कृता ङ्कस्य कृतचिह्नस्येत्यर्थः । अत्र यानि यानि लघुलघु तरलघुतमप्रायाश्चित्तवोधकानि वचनान्तराणि तानि तानि रेतस्सेकात्पूर्वारोहणभेदेन सकृत्सवर्णाधमव र्णाभिगमनभेदेन व्यवस्थेयानि सुधीभिरिति ॥ इत्य नुपातकप्रायश्चित्तनिर्णयः ॥

अथ क्रोधादिना आत्मघातार्थं प्रवृत्तस्य प्रायश्चित्त निर्णयः॥तत्र क्रोधादिनात्मघातार्थं वहुतरव्यापारं कृ त्वा मृत्युन्न प्राप्य स्वयन्निवृत्तः प्रायश्चित्तं कु र्यात् । यथा विष्णुः वहुतरव्यापारं कृत्वा निवर्त्य घृ ताभ्यक्तो वस्त्राच्छादितः प्राणायामं कुर्वन् गायत्रीं ज पन् त्रिरात्रमुपवसेदिति ॥

अथात्मघातिनोऽश्रुपातजलादिदानप्रायश्चित्तम्॥ तत्र संवर्त्तः गोभिर्विप्रैर्हते चौरै स्तथा चैवात्मघात के । नैवाश्रुपातनङ्कार्यं सद्भिः श्रेयोभिकाङ्क्षि भिः ॥ एषामन्यतमं प्रेतं यो दहेत वहेत वा । कटो दकक्रियां कृत्वा तप्तकृच्छ्रं समाचरेत् ॥ तच्छवं के वलं स्पृष्टमश्रु वा पातितं यदि । पूर्वोक्तेष्टाधिकारी स्यादेकाहं क्षपणं स्मृतम् ॥ तप्तकृच्छ्रे धेनुद्वयम् पू र्वोक्तेषु दाहादिषु ॥

अथ चितिभ्रष्टायाः प्रायश्चित्तनिर्णयः ॥ आपस्तंबः चितिभ्रष्टा तु या नारी मोहाद्विचलिता भवेत् । प्राजापत्येन शुद्ध्येत्तु तस्माद्धि पापकर्म्मणः ॥ एवं शास्त्रीयमरणसङ्कल्पानन्तरानिवर्तनेऽपि वोध्यम् । वहूनामेकधर्म्माणामितिवचनात् ॥

अथ रहः कृतेषु प्रकीर्णोपपातकानुपातकमहापातकेषु गायत्र्या जपः प्रायश्चित्तम् । यथा मिताक्षरायाङ्गायत्रीमधिकृत्य शङ्खः शतं जप्ता तु सावित्री महापापप्रणाशिनी । सहस्रं जप्ता तु तथा पातकेभ्यः प्रमोचनी ॥ अयुतन्तु तथा जप्ता सर्वकल्मषनाशिनी । लक्षं जप्ता तु सावित्री महापातकनाशिनी ॥

अथाऽसत्यभाषणप्रायश्चित्तम् ॥यथा विष्णुपुराणे कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते । प्रायश्चित्तन्तु तस्यैकं कृष्णानुस्मरणं परम् ॥ कृष्णेतिमङ्गलन्नाम यस्य वाचि प्रवर्त्तते । भस्मी भवन्ति राजेन्द्र महापातककोटयः ॥ एतत्तु अस्वस्थपरं अतो वहुवित्तव्ययायासन्धानानध्यवसायः अस्वस्थ्याभिभूतपरश्च । अतोनान्यत्राननुष्ठानलक्षणप्रामाण्यमितिसर्वं रमणीयमिति ॥

इति श्रीगोपालन्यायपञ्चाननभट्टाचार्यवि
रचितस्मृतिनिर्णीतप्रायश्चित्तनिर्णय
स्समाप्तः शुभमस्तु ॥

## ॥ प्रायश्चित्तकदम्बशुद्धिपत्रम् ॥

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| कर्तव्यम् | वक्तव्यम् | ४ | ३ |
| पत्यानां | पण्यानां | ७ | ६ |
| श्वसुर | श्वशुर | ७ | १८ |
| पणःषोड | पणषोड | ९ | १० |
| गायत्रया | गायत्र्या | ११ | १२ |
| कर्य्य | कार्य्य | ११ | २० |
| वत | व्रत | १२ | १ |
| मुत्क | मुक्त | १६ | १७ |
| चतस्त्रो | चतस्रो | १६ | १८ |
| मन्य | मान्य | १७ | ९ |
| वव्हे | वह्वे | २४ | १ |
| वव्हे | वह्वे | २४ | १० |
| चतस्त्रो | चतस्रो | २८ | ३ |
| तिस्त्रो | तिस्रो | २८ | ४ |
| चतस्त्रो | चतस्रो | २८ | १० |
| तिस्त्रो | तिस्रो | २८ | १५ |
| चतस्त्रो | चतस्रो | २८ | १९ |
| प्राया | प्राय | ३२ | १७ |
| वद्ध | वर्द्ध | ३३ | १० |
| कृत्स | कृत्स्न | ३४ | १२ |
| प्रज्वान्य | प्रज्वाल्य | ४३ | २० |
| मुष्टं | मुष्टुं | ४५ | १७ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| स्वावित् | श्वावित् | ४६ | १० |
| त्रिभि । | त्रिभिः | ४८ | १४ |
| णया | णाया | ५९ | ५ |
| कृतच्चा | कृच्चा | ६० | ४ |
| साद्धैक | सार्द्धैक | ६१ | १२ |
| सान्ता | सान्त | ६६ | १५ |
| बृतौ | बृत्तौ | ६७ | २० |
| वारिण | वीरण | ६८ | २० |
| पर्णि | वर्णि | ६९ | १६ |
| चाद्रा | चान्द्रा | ७० | ११ |
| इश्य | द्विश्य | ७६ | २० |
| याज्ञ | याङ्गव | ८१ | १८ |
| राश्च | रश्चि | ८२ | १ |
| हि ण्या | हिरण्या | ८४ | ३ |
| सस्मा | तस्मा | ८४ | १६ |
| पड् | षड् | ८५ | १३ |
| विष्प | विष्य | ८७ | ३ |
| च्चातु | ञ्चतु | ८७ | ५ |
| यथ | यथा | ८८ | १२ |
| रष्वि | रीष्व | ९१ | १५ |
| श्रौत्रि | श्रोत्रि | ९२ | ८ |
| श्वत्य | श्चेत्य | ९२ | १२ |
| न्याश्व | न्याश्च | ९३ | ३ |
| स्याक्ते | स्योक्त | ९३ | १७ |

॥ इति शुद्धिपत्रम् ॥

## ॥ श्रीः ॥

सर्वत्र प्रायश्चित्तनिर्णये सर्वसाधारणैः प्रायश्चित्तकदम्वना
निवन्धो जनैरुपयोगितयाऽपेक्ष्यते तं च वहुशो लेखकादियोधदौर्व
माशुद्धतर मवलोक्य साधारणकार्य्योक्षमं च विभाव्य मिथिल
काश नाम परिषद् वहुतर यत्न पुरस्सरं संशोध्य प्राकाशयत् । अत्र
पि सर्वथानिर्भरपुस्तका ऽलाभेन सीसकाक्षरदोषेण शोधकदृष्टि
तेन वा जाता ऽशुद्धि कृपया संशोध्य निज कार्य करणेना ऽस्मत्प
श्रमं सफलयन्तु दयापारावारा विद्वरा इति प्रार्थयते ।

दरभंगानगरस्थ

मिथिलाप्रकाशपरिषत्